अस्मदादिभिरख्याता ये च शास्त्रैकगोचराः ।
ये च देशीयरागास्तद्रागसामान्यमेलकाः ॥ ८४ ॥
येन पन्तुवराल्याख्यकल्याणिप्रमुखा अपि ।
नानादेशीयरागास्तद्रागसामान्यमेलकान् ॥ ८५ ॥
संग्रहीतुं समुन्नीता एते मेला द्विसप्ततिः ।
ततश्चैतेषु वैयर्थ्यशङ्का किंकारणं भवेत् ॥ ८६ ॥
न हि संघटते वृत्तरत्नाकरनिरूपिते ।
तत्र प्रस्तारलब्धानां वृत्तानां निकुरुम्बके ॥ ८७ ॥
अस्मदादिप्रसिद्धान्यवृत्तवैयर्थ्यशंसनम् ।
न हि संघटते तालप्रस्तारजनिते पुनः ॥ ८८ ॥
तालजाले प्रसिद्धान्यतालवैयर्थ्यशंसनम् ।
यदि कश्चिन्मदुन्नीतमेलेभ्यस्तद्द्विसप्ततेः ॥ ८९ ॥
न्यूनं वाऽप्यधिकं वाऽपि प्रसिद्धैर्द्वादशस्वरैः ।
कल्पयेन्मेलनं तर्हि ममायासो वृथा भवेत् ॥ ९० ॥
न हि तत्कल्पने कालत्रोचनोऽपि प्रगल्भते ।
तस्माद्यथैकपञ्चाशद्वर्णाः स्युर्मातृकाभिधाः ॥ ९१ ॥
न हीयन्ते न वर्धन्ते तथा मेला द्विसप्ततिः ।
एवं सामान्यतो मेलाः प्रोक्ता ह्यधिकसप्ततिः ॥ ९२ ॥
अथैतेष्वेव ये मेला लक्ष्यवर्त्मनि विश्रुताः ।
तेष्वहं कतिचिन्मेलान् लक्ष्यलक्षणसंगतान् ॥ ९३ ॥
प्रतिमेलमपि स्पष्टं श्रुतीर्द्वाविंशतिं तथा ।
लक्षणं वक्ष्यते पश्चादुद्देशस्तावदादितः ॥ ९४ ॥
पूर्वोक्तमेलप्रस्तारः क्रमेण क्रियतेऽधुना ।
आदिमः सर्वमेलानां मुखारीमेल उच्यते ॥ ९५ ॥

मेलः सामवराल्याख्यरागस्यातः परं मतः ।
ततो भूपालमेलोऽथ हेज्जुज्जीमेल ईरितः ॥ ९६ ॥
वसन्तभैरवीमेलो गौलमेलस्ततः परम् ।
भैरवीमेल आहर्या मेलः श्रीरागमेलकः ॥ ९७ ॥
काम्भोजिमेलो मेलोऽथ शंकराभरणस्य च ।
सामन्तमेलो देशाक्षीमेलो नाटस्य मेलकः ॥ ९८ ॥
मेलः शुद्धवराल्याख्यरागस्यातः परं मतः ।
मेलः पन्तुवराल्याश्च शुद्धरामक्रियायुतः ॥ ९९ ॥
मेलः सिंहरवाख्योऽस्मत्कल्पितरागस्य मेलकः ।
कल्याणीरागमेलश्चेत्याहत्यैकोनविंशतिः ॥ १०० ॥
अस्मदादिप्रसिद्धानां देशभेदप्रचारिणाम् ।
उच्चावचानां रागाणां मेलस्तावद् द्विसप्ततौ ॥ १०१ ॥
मेलेषु पूर्वमुक्तेषु शारीरानुगुणत्वतः ।
बुद्धिमद्भिः समुन्नेया इति सर्वं समञ्जसम् ॥ १०२ ॥
यद्वा सामन्तरागोऽयं श्रीरागमेलके गतः ।
रागप्रकरणे भ्रमो रागान्मेलविशेषजान् ॥ १०३ ॥
उद्दिष्टानां तु मेलानामधुना लक्ष्म वक्ष्महे ।
प्रतिमेलमपि स्पष्टं श्रुतीर्द्वाविंशतिं तथा ॥ १०४ ॥
शुद्धैः सप्तस्वरैर्युक्तो मुखारीमेल उच्यते ।
चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः ॥ १०५ ॥
द्वे द्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ।
इत्यस्य श्रुतयः पूर्वैर्द्वाविंशतिरुदाहृताः ॥ १०६ ॥
पूर्वोक्तमेलप्रस्तारे मेलोऽयं प्रथमो मतः ।

इति मुखारीमेलः ॥ १ ॥

षड्जः शुद्धाश्च रिगमाः शुद्धौ पञ्चमधैवतौ ॥ १०७ ॥
निषादः काकली नामेत्येतैर्युक्तः स्वरैस्तु यः ।
मेलः सामवराल्याख्यरागस्यायमुदाहृतः ॥ १०८ ॥
षड्ज ऋषभे तिस्रो द्वे गे च मपयोः पृथक् ।
चतस्रश्च चतस्रश्च धे तिस्रः पञ्च नौ स्मृताः ॥ १०९ ॥
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ।
पूर्वोक्तमेलप्रस्तारे भेदोऽयं स्यात्तृतीयकः ॥ ११० ॥

इति सामवरालीमेलः ॥ २ ॥

---

षड्जः शुद्धर्षभः साधारणगांधार एव च ।
शुद्धाश्च मपधा ज्ञेयाः कैशिक्याख्यो निषादकः ॥ १११ ॥
एभिः सप्तस्वरैर्युक्तः प्रोक्तो भूपालमेलकः ।
तिस्रस्तिस्रश्च तिस्रश्च तिस्रः सरिगमाश्रयाः ॥ ११२ ॥
चतस्रः पञ्चमे तिस्रो धैवते तिस्र एव नौ ।
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ॥ ११३ ॥
पूर्वोक्तमेलप्रस्तारे जातो भेदोऽयमष्टमः ।

इति भूपालमेलः ॥ ३ ॥

---

गांधारोऽन्तरनामाऽन्ये स्वराः शुद्धाः प्रकीर्तिताः ॥ ११४ ॥
एतायत्स्वरसंभूतो हेज्जुज्जीमेल ईरितः ।
षड्जे च तिस्र ऋषभे तिस्रो गे पञ्च मध्यमे ॥ ११५ ॥
एका स्यात्पे चतस्रः स्युर्धे तिस्रो द्वे निषादके ।
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ॥ ११६ ॥

अयं त्रयोदशो भेदो मेलप्रस्तारके भवेत् ।
इति हेज्जुजिमेलः ॥ ४ ॥

---

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरसंज्ञकः ॥ ११७ ॥
शुद्धाश्च मपधाः कैशिक्यभिधानो निषादकः ।
वसन्तभैरवीमेलः स्वरैरेतैः समुत्थितः ॥ ११८ ॥
षड्जे तिस्रस्तु रिषभे तिस्रो गे पञ्च मध्यमे ।
एकैव पे चतस्रः स्युस्तिस्रस्तिस्रो धनिश्रिताः ॥ ११९ ॥
इत्यस्य श्रुतयो ज्ञेया द्वाविंतिरिति स्फुटम् ।
अयं च मेलप्रतारे ज्ञेयो भेदश्चतुर्दशः ॥ १२० ॥
इति वसन्तभैरवीमेलः ॥ ५ ॥

---

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरसंज्ञकः ।
मपधाख्याः स्वराः शुद्धाः काकल्याख्यनिषादकः ॥ १२१ ॥
एतावत्स्वरसंभूतो गौलमेलः प्रकीर्तितः ।
एका षड्जे तु रिषभे तिस्रो गे पञ्च मध्यमे ॥ १२२ ॥
एकैव पे चतस्रः स्युस्तिस्रो धे पञ्च नौ मताः ।
इत्यस्य श्रुतयो ज्ञेया द्वाविंशतिरिति स्फुटम् ॥ १२३ ॥
अयं पञ्चदशो भेदो गौलप्रस्तारके स्मृतः ।
इति गौलमेलः ॥ ६ ॥

---

षड्जश्च पञ्चश्रुतिकर्षभः साधारणाह्वयः ॥ १२४ ॥
गांधारो मध्यमः शुद्धः पञ्चमः शुद्धधैवतः ।
कैशिक्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ॥ १२५ ॥

भैरवी नाम रागः स्याद्विति मेलसमाह्वयः ।
षड्जे तिस्र ऋषभे पञ्चैका गे तिस्रो मध्यमे ॥ १२६ ॥

चतस्रः पे धे च तिस्रो निषादे तिस्र एव च ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १२७ ॥

विंशभेदकसंभूतो मेलप्रस्तारके स्मृतः ।

इति भैरवीमेलः ॥ ७ ॥

---

षड्जश्च पञ्चश्रुतिको रिषभश्च तथा परः ॥ १२८ ॥

साधारणाख्यगांधारः शुद्धाश्च मपधास्तथा ।
काकल्याख्यनिषादश्चेत्याहरीमेलके स्वराः ॥ १२९ ॥

एका षड्जेऽथ रिषभे पञ्च गे त्वेकिका मता ।
तिस्रश्चतस्रो मपयोर्धे तिस्रः पञ्च नौ स्मृताः ॥ १३० ॥

इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ।
भेदोऽयमेकविंशोऽस्मन्मेलप्रस्तारके स्मृतः ॥ १३१ ॥

इत्याहरीमेलः ॥ ८ ॥

---

षड्जश्च पञ्चश्रुतिकरिषभाख्यः स्वरः परः ।
साधारणाख्यगांधारः शुद्धौ मध्यमपञ्चमौ ॥ १३२ ॥

चतुःश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ।
एतैः सप्तस्वरैर्जातः श्रीरागस्य तु मेलकः ॥ १३३ ॥

तिस्रः षड्जेऽथ रिषभे पञ्च गे त्वेकिकैव मे ।
तिस्रः पे तु चतस्रः स्युर्धे पञ्चैकैव नौ स्मृताः ॥ १३४ ॥

इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ।
अयं द्वाविंशको भेदो मेलप्रस्तारके भवेत् ॥ १३५ ॥

इति श्रीरागमेलः ॥ ९ ॥

---

षड्जोऽथ पञ्चश्रुतिको रिषभोऽन्तरसंज्ञकः ।
गांधारश्च मपौ शुद्धौ पञ्चश्रुतिकधैवतः ॥ १३६ ॥
कैशिक्याख्यनिषादश्च काम्भोजीमेलके स्वराः ।
षड्जे तिस्रस्तु रिषभे पञ्च तिस्रस्तु गे स्मृताः ॥ १३७ ॥
एकैव मे चतस्रः पे धे पञ्चैका निषादके ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १३८ ॥
अष्टाविंशस्त्वयं भेदो मेलप्रस्तारके स्मृतः ।

इति काम्भोजीमेलः ॥ १० ॥

---

षड्जश्च पञ्चश्रुतिको रिषभश्चान्तराभिधः ॥ १३९ ॥
गांधारस्तु मपौ शुद्धौ पञ्चश्रुतिकधैवतः ।
काकल्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ॥ १४० ॥
शंकराभरणाख्यानरागराजस्य मेलकः ।
षड्ज एकर्षभे पञ्च तिस्रो गे त्वेकिकैव मे ॥ १४१ ॥
चतस्रः पे पञ्च धे च निषादे तिस्र एव च ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ॥ १४२ ॥
एकोनत्रिंशभेदोऽयं मेलप्रस्तारके स्मृतः ।

इति शंकराभरणमेलः ॥ ११ ॥

षड्जः पञ्चश्रुतिश्चाथ रिषभोऽन्तरनामकः ॥ १४३ ॥
गांधारश्च मपौ शुद्धौ षट्श्रुतिर्धैवतस्तथा ।
काकल्याख्यनिषादश्च स्वराः सामन्तमेलके ॥ १४४ ॥
षड्ज एकर्षभे पञ्च तिस्रो गे चैकिका च मे ।
चतस्रः पञ्चमे धे तु षट् तथा द्वौ निषादके ॥ १४५ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
पूर्वोक्तमेलप्रस्तारे त्रिंशभेदोऽयमुच्यते ॥ १४६ ॥

इति सामन्तमेलः ॥ १२ ॥

---

षड्जः षट्श्रुतिको नाम रिषभोऽन्तरसंज्ञकः ।
गांधारस्तु मपौ शुद्धौ पञ्चश्रुतिकधैवतः ॥ १४७ ॥
काकल्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ।
देशाक्षी नाम रागः स्यादिति मेलसमाह्वयः ॥ १४८ ॥
एका षड्जे च रिषभे षड् गे द्वे चैकिका च मे ।
चतस्रः पे पञ्च धे च निषादे तिस्र एव च ॥ १४९ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
पञ्चत्रिंशकभेदोऽयं मेलप्रस्तारके स्मृतः ॥ १५० ॥

इति देशाक्षीमेलः ॥ १३ ॥

---

षड्जः षट्श्रुतिको नाम रिषभोऽन्तरसंज्ञकः ।
गांधारस्तु मपौ शुद्धौ षट्श्रुतिर्धैवतः स्वरः ॥ १५१ ॥
काकल्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ।
नाटाभिधानरागः स्यादिति मेलसमाह्वयः ॥ १५२ ॥

एका षड्जे च रिषभे षड् गे द्वे चैकिका च मे ।
चतस्रः पञ्चमे धे च षट् तथा द्वे निषादके ॥ १५३ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
षट्त्रिंशभेदसंभूतो मेलप्रस्तारके स्मृतः ॥ १५४ ॥

इति नाटमेलः ॥ १४ ॥

---

वरालीमध्यमश्चाथ काकल्याख्यनिषादकः ।
शेषाः शुद्धस्वराः शुद्धवरालीमेलसंज्ञकः ॥ १५५ ॥
षड्जे एकर्षभे तिस्रो गांधारे द्वे च सप्त मे ।
एकैव पञ्चमे तिस्रो धैवते पञ्च नौ स्मृताः ॥ १५६ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ।
एकोनचत्वारिंशोऽयं मेलप्रस्तारके स्मृतः ॥ १५७ ॥

इति शुद्धवरालीमेलः ॥ १५ ॥

---

षड्जः शुद्धर्षभः साधारणगांधारसंज्ञकः ।
वरालीमध्यमश्चैव शुद्धौ पञ्चमधैवतौ ॥ १५८ ॥
काकल्याख्यनिषादश्चेत्येतावत्स्वरसंभवः ।
मेलः पन्तुवराल्याख्यो रागश्च परिकीर्तितः ॥ १५९ ॥
षड्जे एकर्षभे तिस्रस्तिस्रो गे मध्यमे तु षट् ।
पञ्चमे त्वेकिका तिस्रो धैवते पञ्च नौ स्मृताः ॥ १६० ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ।
मेलप्रस्तारके पञ्चचत्वारिंशोऽयमुच्यते ॥ १६१ ॥

इति पन्तुवरालीमेलः ॥ १६ ॥

---

षड्जः शुद्धर्षभश्चैव गांधारोऽन्तरनामकः ।
वरालीमध्यमश्चाथ शुद्धौ पञ्चमधैवतौ ॥ १६२ ॥
काकल्याख्यनिषादश्चेत्येतत्सप्तस्वरोदितः ।
शुद्धरामक्रियाख्यानरागमेलोऽयमुच्यते ॥ १६३ ॥
षड्ज एकर्षभे तिस्रो गांधारे पञ्च मध्यमे ।
चतस्रः पञ्चमे त्वेका धे तिस्रः पञ्च नौ स्मृताः ॥ १६४ ॥
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदाहृताः ।
भेदोऽयमेकपञ्चाशो मेलप्रस्तारके स्मृतः ॥ १६५ ॥

इति शुद्धरामक्रियामेलः ॥ १७ ॥

---

षड्जस्वरश्च रिषभः पञ्चश्रुतिसमन्वितः ।
साधारणाख्यगांधारो वरालीमध्यमस्तथा ॥ १६६ ॥
शुद्धश्च पञ्चमश्चैव पञ्चश्रुतिकधैवतः ।
कैशिक्याख्यनिषादश्चेत्येतत्सप्तस्वरोदितः ॥ १६७ ॥
मेलः सिंहरवे रागे वेङ्कटाध्वरिकल्पिते ।
षड्जे तिस्रोऽथ रिषभे पञ्च गे त्वेकिकैव मे ॥ १६८ ॥
षडेव पञ्चमे त्वेका धे पञ्चैकैव नौ स्मृताः ।
इत्यस्य श्रुतयः प्रोक्ता मया द्वाविंशतिः स्फुटम् ॥ १६९ ॥
भेदोऽयमष्टपञ्चाशो मेलप्रस्तार इष्यते ।

इति सिंहरवमेलः ॥ १८ ॥

---

षड्जस्वरश्च रिषभः पञ्चश्रुतिसमन्वितः ॥ १७० ॥
गांधारोऽन्तरसंज्ञश्च वरालीमध्यमस्तथा ।
शुद्धश्च पञ्चमः पञ्चश्रुतिको धैवतस्तथा ॥ १७१ ॥

काकल्याख्यनिषादश्च कल्याणीमेलके स्वराः ।
षड्ज एकर्षभे पञ्च गांधारे तिस्र एव मे ॥ १७२ ॥
चतस्रः पञ्चमे त्वेका पञ्च धे तिस्र एव नौ ।
इत्यस्य श्रुतयोऽस्माभिर्द्वाविंशतिरुदीरिताः ॥ १७३ ॥
पञ्चषष्टितमो भेदो मेलप्रस्तारके स्मृतः ।

इति कल्याणीमेलः ॥ १९ ॥

---

अस्माभिर्दर्शिता इत्थं लक्ष्यलक्षणसंगताः ॥ १७४ ॥
एकोनविंशतिर्मेलाः संप्रति प्रचरन्ति ये ।
अथेदानीं विचार्यन्ते रामामात्येन लक्षिताः ॥ १७५ ॥
मेलप्रकरणे मेलाः स्वरमेलकलानिधौ ।
तथा हि विंशतिं मेलानाह रामो विमूढधीः ॥ १७६ ॥
युज्यते तत्कथं चेति तत्पृच्छामो वयं पुनः ।
त्वदुक्तरीत्या सारङ्गनाटकेदारगौलयोः ॥ १७७ ॥
संग्राममेकमेलत्वं मेला स्युर्विंशतिः कथम् ।
ननु विंशतिमेलानां मध्ये पञ्चदशस्वपि ॥ १७८ ॥
मेलेषु पञ्चमेलानामन्तर्भावस्त्वयेरितः ।
अन्यस्य पुनरन्यस्मिन्नन्तर्भावो भविष्यति ॥ १७९ ॥
अन्तराख्यानगांधारकाकल्याख्यनिषादयोः ।
स्थाने प्रतिनिधित्वेन संगृहेते यदा स्वरौ ॥ १८० ॥
च्युतमध्यमगांधारच्युतषड्जनिषादकौ ।
तदा विंशतिमेलानां मध्ये पञ्चदशस्वपि ॥ १८१ ॥
मेलेषु पञ्चमेलानामन्तर्भावस्त्वयेरितः ।
सारङ्गनाटकेदारगौलमेलद्वयेऽपि च ॥ १८२ ॥

अविशेषेण भवता संग्राह्यत्वे सधर्मकौ ।
च्युतमध्यमगांधारच्युतषड्जनिषादकौ ॥ १८३ ॥

अन्यस्य पुनरन्यस्मिन्नन्तर्भावो भवेत्तदा ।
ततो विंशतिमेलोक्तिव्याघातोऽयं दुरुत्तरः ॥ १८४ ॥

मेलानां विंशतेर्यानि लक्ष्माण्युक्तानि हि त्वया ।
तानि सर्वाणि दृश्यन्ते विरुद्धान्येव केवलम् ॥ १८५ ॥

तत्र स्थालीपुलाकाख्यन्यायेन कतिचित्पुनः ।
लक्षणानि प्रदर्श्यन्ते राम येष्वेव मोहितः ॥ १८६ ॥

न हि तान्यत्र शक्यन्ते दूषणानि त्वयेरिते ।
ग्रन्थे गणयितुं दोषसहस्रग्रथने मया ॥ १८७ ॥

तथा हि भैरवीरागः शंकराभरणस्तथा ।
गौडिरागश्च कथितास्त्वया श्रीरागमेलजाः ॥ १८८ ॥

तत्कथं भैरवी शुद्धधैवतेनान्विता खलु ।
शंकराभरणो रागोऽन्तरगांधारवांस्तथा ॥ १८९ ॥

सकाकलीनिषादश्च गौडीरागस्त्वयं पुनः ।
जातो मालवगौलाख्यरागमेलादिसंस्थितः ॥ १९० ॥

रागाणां पुनरेतेषां जन्म श्रीरागमेलतः ।
कथं विकत्थसे राम राम राम तव भ्रमः ॥ १९१ ॥

यच्चोक्तं भवता शुद्धरामक्रीरागमेलतः ।
पाडीरागार्द्रदेश्याख्यरागजन्म भवेदिति ॥ १९२ ॥

तद्दोषघातये राम रामस्मरणमातनु ।
पाड्यार्द्रदेशिरागौ च प्रसिद्धौ गौलमेलजौ ॥ १९३ ॥

यदप्यावेदिता राम राम बुद्धिविरामता ।
देशाक्षीमेल एवैष कैशिक्यारव्यनिषादकम् ॥ १९४ ॥

प्राप्य कन्नडगौलः स्याद्गौलस्यातिमृषावदा ।
कर्णाटगौलः श्रीरागमेलोद्भवनतो न किम् ॥ १९५ ॥
यच्च कन्नडगौलस्य मेले समुपजायते ।
घण्टारव इति प्रोक्तं पातकेनामुना पुनः ॥ १९६ ॥
सत्यं न मोक्ष्यसे राम रामसेतुं गतोऽपि वा ।
भैरवीमेलसंभूतो रागो घण्टारवः खलु ॥ १९७ ॥
यदप्युक्तं त्वया नादरामक्रीरागमेलके ।
साधारणाख्यगांधारः संग्राह्य इति तत्त्वतः ॥ १९८ ॥
अपूर्वचयकारत्वमावेदयति राम ते ।
नादरामक्रियामेलगांधारोऽप्यन्तराभिधः ॥ १९९ ॥
यच्चोक्तं रीतिगौलाख्यरागमेलस्य लक्षणम् ।
शुद्धाः सरिगमाः पञ्च पञ्चश्रुतिकधैवतः ॥ २०० ॥
कैशिक्याख्यनिषादश्चेत्यत्र रामक्रियस्तथा ।
भैरवीरागमेलोत्थो रीतिगौलः प्रकीर्त्यते ॥ २०१ ॥
शुद्धर्षभश्च गांधारः पञ्चश्रुतिकधैवतः ।
यच्च केदारगौलाख्यरागमेलस्य लक्षणे ॥ २०२ ॥
संग्राह्यच्युतषड्जाख्यनिषाद इति कल्पितम् ।
तत्र स्थानेऽनु शोचामि तव रामाभिधां पुनः ॥ २०३ ॥
कैशिक्याख्यनिषादो हि मेले केदारगौलके ।
यदप्युक्तं त्वया राम हेज्जुज्जीरागमेलके ॥ २०४ ॥
काकल्याख्यनिषादस्तु संग्राह्य इति तत्पुनः ।
अभियुक्तं यतस्तस्मिन्मेले शुद्धनिषादकः ॥ २०५ ॥
गृहीतो निखिलैर्वैणैर्वैणिकैर्गायकैरपि ।
यथोक्तं मयका राम कामोदीमेललक्षणम् ॥ २०६ ॥

गन्धी अन्तरकाकल्यौ रिधौ पञ्चश्रुती तथा ।
शेषाः शुद्धाश्च समपाः काम्भोजीमेलके त्विति ॥ २०७ ॥
तत्तावत्तव गीतज्ञवहिष्कार्यत्वसाधनम् ।
काम्भोजीरागमेलस्य कैशिक्याख्यनिषादकः ॥ २०८ ॥
इति नो वेत्ति किं वीणावादिनां गृहदास्यपि ।
तस्माद्वैकारराामोक्तान्मेलान्विश्वस्य वैणिकैः ।
कान्तारकूपे वेष्टव्यमुद्धृत्य भुजमुच्यते ॥ २०९ ॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्र-
साग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितनागमा-
म्बिकावरद्वितीयनन्दनस्य साग्निचित्यसर्वक्रतुया-
जियज्ञनारायणदीक्षिताव्यवहितानुजस्याच्युत-
विजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षि-
तस्य कृतौ चतुर्दण्डीप्रकाशिकायां
चतुर्थं मेलप्रकरणं संपूर्णम् ।

---

## पञ्चमं रागप्रकरणम् ।

तुर्यप्रकरणे मेलाः सप्रपञ्चमुदीरिताः ।
अथ मेलोद्भवा रागा लक्ष्यन्ते नातिविस्तरम् ॥ १ ॥
रञ्जयन्ति मनांसीति रागास्ते दशलक्षणाः ।
भवन्ति ते मतङ्गाद्यैः प्रापितास्तानि च क्रमात् ॥ २ ॥
लक्षणानि दशोक्तानि लक्ष्यन्ते तावदादितः ।
ग्रहांशौ मन्द्रतारौ च न्यासापन्यासकौ तथा ॥ ३ ॥

अथ संन्यासविन्यासौ बहुत्वं चाल्पता तथा ।
लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ॥ ४ ॥
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ।
येनादौ गीयते गीतं स्वरेण स भवेद् ग्रहः ॥ ५ ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ।
अंशस्वरस्त्वसावेव जीवस्वर इति स्मृतः ॥ ६ ॥
नीचैः स्वरेण यद्गानं स मन्द्रस्वर उच्यते ।
उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ॥ ७ ॥
न्यासस्वरः स कथितो येन गीतं समाप्यते ।
अवान्तरसमाप्तिं यो रागस्यापि तनोति सः ॥ ८ ॥
अपन्यासः स्मृतो न्यासस्त्वात्यन्तिकसमाप्तिकृत् ।
इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ॥ ९ ॥
संन्यासो नाम गीताद्यखण्डभागसमाप्तिकृत् ।
गीतखण्डाद्यावयवस्यान्ते तिष्ठति स स्वरः ॥ १० ॥
विन्यास एतौ संन्यासविन्यासौ भरतादिभिः ।
अन्तर्भूतावपन्यासस्वर एवेति कीर्तितौ ॥ ११ ॥
अलङ्घनं तथाऽभ्यासो बहुत्वं द्विविधं मतम् ।
स्वरस्यास्पर्शनं यत्र लङ्घनं तत्र कीर्तितम् ॥ १२ ॥
साकल्येन स्वरस्पर्शस्त्वलङ्घनमिति स्मृतम् ।
यदेकस्य स्वरस्यैव नैरन्तर्येण याऽथ या ॥ १३ ॥
व्यवधानेन या भूयो भूयोऽप्युच्चारणं हि तत् ।
अभ्यास इति शंसन्ति बहुत्वं द्विविधं ततः ॥ १४ ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ।
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ॥ १५ ॥

पूर्वोक्तालक्षणाभावो लक्षणं परिकीर्तितम् ।
लक्षणानि दशाप्येवं लक्षितानि मया स्फुटम् ॥ १६ ॥
अथैतल्लक्षणान्रागानुद्दिशामि क्रमादिदम् ।
रागास्तावद्दशविधा भरताद्यैरुदीरिताः ॥ १७ ॥
ग्रामरागाश्चोपरागा रागा भाषाविभाषिकाः ।
सर्वेऽप्यन्तरभाषाख्या रागाङ्गाख्यास्ततः परम् ॥ १८ ॥
भाषाङ्गानि क्रियाङ्गानि ह्युपाङ्गानीति च क्रमात् ।
दशस्वेतेषु रागेषु ग्रामरागादयः पुनः ॥ १९ ॥
रागास्त्वन्तरभाषान्ता मार्गरागा भवन्ति षट् ।
ततो गन्धर्वलोकेन प्रयोज्यास्ते व्यवस्थिताः ॥ २० ॥
तस्माद्रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गसंज्ञिताः ।
रागाश्चत्वार एवैते देशीरागाः प्रकीर्तिताः ॥ २१ ॥
तत्र रत्नाकरग्रन्थे शार्ङ्गदेवेन धीमता ।
चतुःषष्ट्यधिकं रागशतद्वयमुदीरितम् ॥ २२ ॥
लक्ष्यन्ते ते न कुत्रापि लक्ष्यवर्त्मनि संप्रति ।
ततः प्रसिद्धिवैधुर्यात्त्यक्त्वा रागांस्तु तान्पुनः ॥ २३ ॥
सर्वत्र लक्ष्यमार्गेऽत्र संप्रति प्रचरन्ति ये ।
तानस्मत्परमाचार्यतातपादार्यसमुद्धृतान् ॥ २४ ॥
रागान्निरूपयिष्यामि लक्ष्यलक्षणसंमतान् ।
ग्रहांशन्यासमन्द्रादिव्यवस्था तेषु यद्यपि ॥ २५ ॥
देशीत्वात्सर्वरागेषु नैकान्तेन प्रवर्तते ।
तथाऽपि लक्ष्यमाश्रित्य गानलक्ष्मानुसृत्य च ॥ २६ ॥
रागाणां लक्षणं ब्रूमः संप्रति प्रचरन्ति ये ।
निरूप्यमाणरागाणां षड्जादिक्रमतो ब्रुवे ॥ २७ ॥

लिख्यन्ते पञ्चभिः पद्यै रागाः षड्जग्रहस्वराः ।
नाटः सौराष्ट्रसारङ्गनाटौ शुद्धवसन्तकः ॥ २८ ॥

गुण्डक्रिया मेचबौलिर्नादरामक्रियस्तथा ।
वराली ललिता पाडिरागः सालगभैरवी ॥ २९ ॥

श्रीरागारभिधन्यासिशंकराभरणाभिधाः ।
रागा हिन्दोलभूपालहिन्दोलाद्यवसन्तकाः ॥ ३० ॥

आहर्यभैरिसामन्ता वसन्ताद्या च भैरवी ।
हेज्जुज्जिमालवश्रीश्च शुद्धरामक्रिया तथा ॥ ३१ ॥

काम्भोजी च मुखारी च देवगान्धारिका तथा ।
नागध्वनिः सामरागस्तथा सामवरालिका ॥ ३२ ॥

एकत्रिंशादिमे रागाः षड्जन्यासग्रहांशकाः ।
गुर्जरी मिश्रषड्जश्च रेवगुप्तिस्त्रयोऽप्यमी ॥ ३३ ॥

रिन्यासांशग्रहाः प्रोक्ता मतङ्गभरतादिभिः ।
नारायणाख्यदेशाक्षी देशाक्षीराग एव च ॥ ३४ ॥

नारायण्यथ कर्णाटो बङ्गालश्चेति विश्रुताः ।
इमे रागास्तु चत्वारो गन्यासांशग्रहाः स्मृताः ॥ ३५ ॥

जयन्तसेनो वहुली मध्यमादिरिमे त्रयः ।
मग्रहा मध्यमन्यासा मांशकाः परिकीर्तिताः ॥ ३६ ॥

आन्धाली चैव सावेरी पन्यासांशग्रहे उभे ।
रागो मल्लहरी घण्टारवो वेलावली तथा ॥ ३७ ॥

भैरवी चेति चत्वारो धन्यासांशग्रहाः स्मृताः ।
गौलकेदारगौलौ द्वौ छायागौलाभिधस्तथा ॥ ३८ ॥

रीतिगौलः पूर्वगौलो गौलो नारायणाभिधः ।
रागः कणटगौलश्च सप्त गौला इमे पुनः ॥ ३९ ॥

निषादग्रहनिन्यासनिषादांशाः प्रकीर्तिताः ।
चतुःपञ्चाशदुद्दिष्टा इति रागा ग्रहादिभिः ॥ ४० ॥

अथैतेषां क्रमाल्लक्ष्म लक्ष्यलक्षणसंगतम् ।
नाटो भाषाङ्गरागोऽत्र वादी षड्जः स्वरो मतः ॥ ४१ ॥

संवादी पञ्चमो ज्ञेयो गनी प्रोक्तौ विवादिनौ ।
अनुवादि रिधद्वन्द्वं चायं सायं प्रगीयते ॥ ४२ ॥

अवरोहे निधगरिवर्जमेनं प्रचक्षते ।
संपूर्णरागश्चैवैष संमतो गानवेदिनाम् ॥ ४३ ॥

सौराष्ट्ररागो मेलस्य गौलस्याभ्युदयः परः ।
संपूर्णश्चैष वादी च षड्जः संवादिनौ मपौ ॥ ४४ ॥

निषादश्चानुवादीह रिधौ द्वौ च विवादिनौ ।
सर्ववेलासु गातव्यः ख्यातः संगीतवेदिभिः ॥ ४५ ॥

सारङ्गनाटः संपूर्णः संभूतो गौलमेलतः ।
अस्यापि च भवेद्वादी षड्जः संवादिनौ मपौ ॥ ४६ ॥

विवादिनौ गनी चानुवादिनौ धैवतर्षभौ ।
सायं सायं प्रागातव्यः संगीताम्बुधिपारगैः ॥ ४७ ॥

रागः शुद्धवसन्ताख्यो रागाङ्गो गीयते प्रगे ।
शंकराभरणाख्यातरागमेलसमुद्भवः ॥ ४८ ॥

आह वैकाररामस्त्वारोहे पञ्चमवर्जनात् ।
षाडवत्वं न तद् युक्तं यस्मादस्यावरोहणात् ॥ ४९ ॥

आरोहेऽपि प्रयोगोऽस्ति तस्मात्संपूर्णरागता ।
दिनस्य चरमे यामे गीतः सोऽयं शुभावहः ॥ ५० ॥

गुण्डक्रिया गौलमेलजाता संपूर्णतामता ।
नादरामक्रियारागः संपूर्णस्वरसंगतः ॥ ५१ ॥

गेयः सायाह्नसमये गौलमेलसमुद्भवः ।
वराळिरागः संपूर्णो वादी षड्जोऽथ कथ्यते ॥ ५२ ॥
संवादिनौ मपौ ज्ञेयौ गनी चैव विवादिनौ ।
रिषभो ह्यनुवादी स्यात्सर्वदाऽप्येष गीयते ॥ ५३ ॥
प्रगे प्रगेया ललिता पवर्जा गौलमेलजा ।
पाडीरागो गौलमेलप्रभूतः षाडवो मतः ॥ ५४ ॥
गलोपश्चरमे यामे दिनस्य परिगीयते ।
श्रीरागमेलसंभूतो रागः सालगभैरवी ॥ ५५ ॥
संपूर्णस्वरसंयुक्ता यामे गेया तुरीयके ।
श्रीरागः परिपूर्णोऽपि गधयोः स्थानवर्जितः ॥ ५६ ॥
गेयः सायाह्नसमये सर्वसंपत्प्रदायकः ।
आरभीनामको रागः संपूर्णस्वरसंगतः ॥ ५७ ॥
मेलस्त्वस्य स एव स्याच्छंकराभरणः स्वयम् ।
धन्यासिरागो रागाङ्गो जातः श्रीरागमेलतः ॥ ५८ ॥
रिधलोपादौडुवोऽयं प्रातर्गीतः शुभप्रदः ।
शंकराभरणो रागः पूर्णः सायं प्रगीयते ॥ ५९ ॥
हिन्दोलसंज्ञको रागो भैरवीमेलसंभवः ।
औडुवो रिधलोपेन सर्वकालेषु गीयते ॥ ६० ॥
भूपालः प्रातरेवैष औडुवो मनिवर्जनात् ।
एष रागाङ्गरागेषु गणितः शार्ङ्गसूरिणा ॥ ६१ ॥
आहरीमेलजः पूर्णो हिन्दोलावयवस्तकः ।
संपूर्णस्त्वाहरीरागः षड्जपञ्चमकौ क्रमात् ॥ ६२ ॥
वादिसंवादिनौ सप गनी चैव विवादिनौ ।
अनुवादिस्वरौ ज्ञेयौ रिधौ सायं प्रगीयते ॥ ६३ ॥

आभेरिरागः पूर्णोऽयमाहरीमेलसंभवः ।
सामन्तरागः पूर्णोऽत्र वादिसंवादिनौ सपौ ॥ ६४ ॥
विवादिनौ निगावन्ये स्वराः स्युरनुवादिनः ।
शंकराभरणच्छायः सायमेष प्रगीयते ॥ ६५ ॥
वसन्तभैरवीरागः संपूर्णोऽप्यल्पपञ्चमः ।
प्रातर्गातव्य इत्येवं ख्यातो धातारमजन्मना ॥ ६६ ॥
हेज्जुज्जिरागः संपूर्णो यामेऽह्नो गीयतेऽन्तिमे ।
पाडवो मालवश्रीः स्याद्रागाङ्गमृषभोज्झितः ॥ ६७ ॥
मेलः श्रीरागमेलस्य सर्वकालेषु गीयते ।
संपूर्णः शुद्धरामक्री वादी षड्जोऽत्र कथ्यते ॥ ६८ ॥
संवादी पञ्चमः प्रोक्तो गनी चैव विवादिनौ ।
अनुवादि रिधद्वन्द्वं गेयं सायं प्रगीयते ॥ ६९ ॥
क्रियाङ्गरागोऽयमिति भरताद्यैरुदीरितम् ।
काम्भोजिरागः संपूर्णोऽप्यारोहे मनिवर्जितः ॥ ७० ॥
सायं संगीयते सोऽयं संगीतागमपारगैः ।
मुखारिरागः संपूर्णो वादिसंवादिनाविह ॥ ७१ ॥
सपौ विवादिनौ त्वत्र गनी चैवानुवादिनौ ।
रिधाविति च बोद्धव्यं गातव्यः सर्वदाऽप्ययम् ॥ ७२ ॥
संपूर्णो देवगान्धारीरागः श्रीरागमेलजः ।
गातव्यः प्रातरेवैष नागध्वनिरथोच्यते ॥ ७३ ॥
संपूर्णरागो रागाङ्गं शंकराभरणोत्थितः ।
शंकराभरणान्मेलात्संभूतः सामरागकः ॥ ७४ ॥
संपूर्णः सततं गेयो मन्द्रमध्यमभूषितः ।
रागः सामवराल्याख्यः सामवेदसमुद्भवः ॥ ७५ ॥

संपूर्णो गीयते नित्यमित्येकत्रिंशदीरिताः ।
रागाः सलक्षणाः सम्यक्षड्जन्यासग्रहांशकाः ॥ ७६ ॥
अथर्षभग्रहाणां त्रिरागाणां लक्ष्म चक्ष्महे ।
संपूर्णो गुर्जरीरागो रागाङ्गो गौलमेलजः ॥ ७७ ॥
प्रगे प्रगेयः कथितस्त्ववरोहे धवर्जितः ।
भिन्नषड्जाख्यरागोऽयं जातो भूपालमेलतः ॥ ७८ ॥
संपूर्णः प्रथमे यामे दिनस्य परिगीयते ।
रेवगुप्तिस्तु हेज्जुज्जिमेलोत्थो मनिवर्जनात् ॥ ७९ ॥
औडुवश्चरमे यामे दिवसस्यैष गीयते ।
चत्वारोऽथ निरूप्यन्ते रागा गान्धारकग्रहाः ॥ ८० ॥
नारायणाद्यदेशाक्षिः संपूर्णो गीयते प्रगे ।
शंकराभरणाख्यानरागमेलसमुद्भवः ॥ ८१ ॥
संपूर्ण एव देशाक्षीरागः प्रातः प्रगीयते ।
मेलो नारायणीरागः शंकराभरणोदितः ॥ ८२ ॥
संपूर्णस्त्वेष गातव्यः प्रातः संगीतकोविदैः ।
रागः कर्णाटबङ्गालो भाषाङ्गं गौलमेलजः ॥ ८३ ॥
प्रातःकालेषु गातव्यः षाडवोऽयं निवर्जितः ।
सर्वदाऽप्येष गातव्यो गीतज्ञैः शुभरक्तिदः ॥ ८४ ॥
मन्यासांशग्रहा रागा निरूप्यन्ते त्रयोऽधुना ।
जयन्तसेनाख्यरागो जातः श्रीरागमेलतः ॥ ८५ ॥
रिवर्जितः षाडवोऽयं सायंकाले प्रगीयते ।
मध्यमादिस्तु रागाङ्गरागः श्रीरागमेलजः ॥ ८६ ॥
रिधलोपादौडुवोऽयं सायंकाले प्रगीयते ।
रक्तिरेतस्य रागस्य मुरल्यां दृश्यतेऽधिका ॥ ८७ ॥

चहुली गौलमेलोत्थो रागो मध्यमवर्जनात् ।
षाडवो गीयते सोऽयं सायंकाले विचक्षणैः ८८ ॥
पन्यासांशग्रहौ रागौ निरूप्येते मयाऽधुना ।
निगलोपादौडुवोऽयमान्धालीराग ईरितः ॥ ८९ ॥
मेलः श्रीरागमेलस्य कथ्यते गीतवेदिभिः ।
गौलमेलसमुद्भूतः सावेरीराग ईरितः ॥ ९० ॥
आरोहे गनिलोपोऽयं प्रातर्गीतो विचक्षणैः ।
निरूप्यन्तेऽधुना रागाश्चत्वारो धैवतग्रहाः ॥ ९१ ॥
ख्याता मलहरी गौलमेलजाता निलोपतः ।
षाडवत्वं गता प्रातर्गातव्या गीतकोविदैः ॥ ९२ ॥
घण्टारवाख्यरागस्तु भैरवीमेलसंभवः ।
संपूर्णस्वरसंयुक्तः सर्वकालेषु गीयते ॥ ९३ ॥
वेलावली तु भाषाङ्गं जातः श्रीरागमेलतः ।
संपूर्णभावं भजते प्रभाते चैष गीयते ॥ ९४ ॥
सायाह्नरागः संपूर्णस्तूपाङ्गं भैरवी स्मृतः ।
वादी षड्जोऽत्र संवादी पञ्चमः स्याद्विवादिनौ ॥ ९५ ॥
स्वरौ निषादगांधारौ रिधौ चैवानुवादिनौ ।
निरूप्यन्ते सप्त रागा निन्यासांशग्रहा मया ॥ ९६ ॥
गौलस्तु षाडवो रागो रागाङ्गं धैवतोज्झितः ।
वादिसंवादिनावत्र रिगौ शश्वत्प्रगीयते ॥ ९७ ॥
केदारगौलः संपूर्णः काम्भोजीमेलसंभवः ।
गेयोऽसौ सुतरां रक्तिदायको गायकोत्तमैः ॥ ९८ ॥
उपाङ्गरागा इत्येवमूचिरे भरतादयः ।
गौलमेलोत्थच्छायागौलः संपूर्णतां गतः ॥ ९९ ॥

रीतिगौलाख्यरागस्तु भैरवीमेलसंभवः ।
संपूर्णश्चैष गातव्यः सोऽयं संगीतकोविदैः ॥ १०० ॥
पूर्वगौलस्य मेलः स्याच्छुद्धगौलश्च यः स्मृतः ।
संपूर्णश्चैष गातव्यः सायाह्ने गीतकोविदैः ॥ १०१ ॥
नारायणाद्यगौलस्तु संपूर्णः परिकीर्तितः ।
केदारगौलमेलोत्थः सायाह्ने त्वेष गीयते ॥ १०२ ॥
रागः कन्नडगौलोऽयं जातः श्रीरागमेलतः ।
संपूर्णोऽपि कदाचित्स्यादारोहे त्यक्तमध्यमः ॥ १०३ ॥
रागः सिंहरवो नाम षड्जन्यासग्रहांशकः ।
सोऽयमस्माभिरुन्नीतः संपूर्णो गीयते सदा ॥ १०४ ॥
लक्षिताः पञ्चपञ्चाशदिति रागाः स्फुटं मया ।
गीतठायप्रबन्धा हि तानप्याश्रित्य वर्तिताः ॥ १०५ ॥
देशीयरागाः कल्याणीप्रमुखाः सन्ति कोटिशः ।
गीतठायप्रबन्धेषु नैते योग्याः कदाचन ॥ १०६ ॥
कल्याणिरागः संपूर्ण आरोहे मनिवर्जितः ।
गीतप्रबन्धायोग्योऽपि तुरुष्काणामतिप्रियः ॥ १०७ ॥
रागः पन्तुवराल्याख्यः संपूर्णः पामरप्रियः ।
गीतठायप्रबन्धानां दूराद् दूरतरः स्मृतः ॥ १०८ ॥
एवं प्रकारेणोक्ता रागा देशसमुद्भवाः ।
आनन्त्यात्संकराच्चैव नास्माभिर्लक्षिताः पृथक् ॥ १०९ ॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्र-
साग्निचित्याप्तयाजपेययाजिगोविन्ददीक्षितनागमा-
म्बिकायरदीक्षितापरनाम्नस्य साग्निचित्यसर्वक्रतुया-
जियज्ञनारायणदीक्षिताप्पयदीक्षितानुजस्याच्युत-

विजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षि-
तस्य कृतौ चतुर्दण्डीप्रकाशिकायां
पञ्चमं रागप्रकरणं संपूर्णम् ।

---

## षष्ठमालापप्रकरणम् ।

---

एवं रागप्रकरणे रागाः सम्यङ् निरूपिताः ।
अथालापप्रकरणे तेषामालाप उच्यते ॥ १ ॥
तत्रालापेषु सर्वत्राप्यादावाक्षिप्तिका स्मृता ।
आक्षिप्तिकैव लोकेऽस्मिन्नायत्तामिति गीयते ॥ २ ॥
पीनत्वेन यथाऽऽक्षिप्तं स्वनिर्वाहाय भोजनम् ।
रागेणापि तथाऽऽक्षिप्तेत्यादावाक्षिप्तिका मता ॥ ३ ॥
आक्षिप्तिकानन्तरं तु कर्तव्या रागवर्धनी ।
इयमेव जनैर्लोके यडुपित्यभिधीयते ॥ ४ ॥
यस्मादाक्षिप्तिकोद्भूतं रागं वर्धयते स्फुटम् ।
तस्मादाख्यायते रागवर्धनीत्यभिधानतः ॥ ५ ॥
रागवर्धन्यसावेव प्रोक्ता करणमित्यपि ।
ततो विदारी गातव्या लोके मुक्तायिसंज्ञिता ॥ ६ ॥
आद्यद्वितीययो रागवर्धन्योश्छेदकत्वतः ।
विदारीति वदन्त्येवमुत्तरत्रापि योज्यताम् ॥ ७ ॥
अनन्तरं समुद्गेया द्वितीया रागवर्धनी ।
तस्या एव च लोकेऽस्मिन्द्वेधा यडुपिति प्रथा ॥ ८ ॥
तद्विदारी द्वितीयाऽथ तृतीया रागवर्धनी ।
तृतीया तद्विदारी च कर्तव्या तदनन्तरम् ॥ ९ ॥

सेयं तृतीयिका रागवर्धनी तद्विदारिका ।
विकल्पेन क्वचित्स्यातां न स्यातां वा क्वचित्क्वचित् ॥ १०

ततः स्थायी भवेत्तत्र स्थायिशब्दार्थ उच्यते ।
यत्रोपवेश्यते तानः स्वरे स्थायी स कथ्यते ॥ ११ ॥

तत्रादौ मध्यषड्जाख्यः स्थायी तल्लक्ष्म वक्ष्महे ।
मध्यषड्जं समारभ्य तारषड्जावधि क्रमात् ॥ १२ ॥

भवन्त्यष्टौ स्वरा रागे संपूर्णे सप्त षाडवे ।
औडुवे षट् क्रमात्तेषामारोहः क्रमतः पुनः ॥ १३ ॥

एकैकस्य स्वरस्यैषां तानद्वितयसंख्यया ।
मध्यषड्जादितारान्तस्वरेष्वष्टस्वपि स्मृताः ॥ १४ ॥

इत्यष्ट ताना मध्यषड्जन्यासवन्तो भवन्त्यमी ।
तानद्वयं स्वरे यस्मिन्नीयते तत्पुरःस्थिताः ॥ १५ ॥

न संग्राह्याः स्वराः किं तु स्वाधःस्थाने गतेष्वपि ।
आमन्द्रर्षभमारोहावरोहक्रमतः स्वरान् ॥ १६ ॥

यथायोगं समादाय विन्यस्येन्मध्यषड्जके ।
अवरोहेऽप्येवमेव विशेषस्तु प्रदर्श्यते ॥ १७ ॥

तानद्वयं तारषड्जे गीत्वा तारनिषादके ।
तानद्वयं यदा गायेत्तस्मिन्नवसरे पुनः ॥ १८ ॥

न संस्पृशेदेवमेव पञ्चमे मध्यमे तथा ।
गांधारर्षभयोर्मध्यषड्जेऽपि च पृथक्पृथक् ॥ १९ ॥

तानद्वये गीयमाने स्पृशेन्नाधस्तनस्वरान् ।
तदेवमवरोहे तु ग्राह्या नाधस्तनाः स्वराः ॥ २० ॥

आरोहे त्वमिमा नैव स्वरा ग्राह्या इति स्थितिः ।
अत्रारोहेऽवरोहे च द्वौ द्वौ तानौ प्रतिस्वरम् ॥ २१ ॥

तयोरादिमताने तु न कार्यो निष्क्रमः स्वरे ।
किं तु स्वरस्पर्शमात्रं ततः स्थाने द्वितीयके ॥ २२ ॥
क्षणमात्रं स्वरे स्थित्वा पश्चात्तानं समापयेत् ।
नियमोऽयं मध्यषड्जस्थायिमात्रे प्रकीर्तितः ॥ २३ ॥
तदेवं मध्यषड्जाख्यः स्थायी समनुवर्णितः ।
एवं मध्यनिषादाख्यस्वरादामन्द्रषड्जकम् ॥ २४ ॥
सप्त स्वराः संभवन्ति तेषु सप्तस्वरेष्वपि ।
निषधाद्याः स्वरा ये ये सहन्तेऽवस्थितिं पृथक् ॥ २५ ॥
तान्स्वरान्स्थायिनः कृत्वा पश्चादारोहमार्गतः ।
तत्तत्स्वरापेक्षयाऽष्टौ स्वरा ग्राह्या यथाक्रमम् ॥ २६ ॥
तदूर्ध्वं विद्यमानांस्तु स्वरांस्तांश्चैव संस्पृशेत् ।
एवं मन्द्रस्वरेष्वेवारोहे तानचतुष्टयम् ॥ २७ ॥
अवरोहे चतुस्तानान्नीतस्थायिस्वरेष्वथ ।
न्यासः कर्तव्य इत्येवं संप्रदायः प्रदर्शितः ॥ २८ ॥
समाप्यैवं स्थायिविधिं कुर्यात्तदनुवर्तनम् ।
वर्धनीमेव लोकेऽस्मिन्प्राहुर्मकरिणीं जनाः ॥ २९ ॥
वर्धन्याश्च भवेन्मन्द्रषड्जे तावदुपक्रमः ।
न्यासस्तु मध्यषड्जेऽथ चतुर्थी रागवर्धनी ॥ ३० ॥
ततस्तदनुसारेण चतुर्थी स्याद्विदारिका ।
साधारणं सर्वरागेष्वेतदालापलक्षणम् ॥ ३१ ॥
तानव्याप्ततयत्वाद्रागालापेषु मारूतम् ।
आलापलक्षणमिदं लक्ष्यतां लक्ष्यकोविदैः ॥ ३२ ॥
इति श्रीमदद्वैतविद्याचार्यसाहित्यरत्नपंडितगुणनातिराज-
सार्वभौमपायाचमेयषाभिनवपिन्दशीशिलनागमा-

श्रीविकावरद्वितीयनन्दनस्य साग्निचित्सर्वक्रतुया-
जियज्ञनारायणदीक्षिताग्र्यबहितानुजस्याच्युत-
विजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षि-
तस्य कृतौ चतुर्दण्डीप्रकाशिकायां
षष्ठमालापप्रकरणं संपूर्णम् ।

—o—

## सप्तमं ठायप्रकरणम् ।

---

एवं षष्ठप्रकरणे प्रोक्तमालापलक्षणम् ।
सप्तमेऽथ प्रकरणे ठायलक्षणमुच्यते ॥ १ ॥

तत्तद्रागानुसारेण यत्र कुत्रापि च स्वरे ।
स्थित्वा स्वरं तमेवाथ स्थायिनं परिकल्प्य च ॥ २ ॥

तत्पुरोवर्तिषु चतुःस्वरेष्वथ यथाक्रमम् ।
तत्तद्रागानुसारेणारोहे तानचतुष्टयम् ॥ ३ ॥

अवरोहे तथा तानचतुष्टयमिति क्रमात् ।
गीत्वा तानाष्टकं पश्चादारभ्य स्थायिनं स्वरम् ॥ ४ ॥

यदुक्तं कश्चिदाकल्प्य विन्यस्येन्मन्द्रषड्जके ।
स्थायिस्थितस्य तस्यैव षड्जस्याभिधीयते ॥ ५ ॥

लोके मकरिणीत्येवं संज्ञा मुक्तायिका ततः ।
ठायसामान्यलक्ष्मेदं वेङ्कटाध्वरिणोदितम् ॥ ६ ॥

परमो गुरुरस्माकं तानप्पाचार्यशेखरः ।
सर्वेषामपि रागाणामेतल्लक्ष्मानुसारतः ।
ठायान्प्रकल्पयामास लक्ष्यमस्य तदेव सः ॥ ७ ॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्र-
साग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितनागमा-
म्बिकावरद्वितीयनन्दनस्य साग्निचित्यसर्वक्रतुया-
जियज्ञनारायणदीक्षिताव्यवहितानुजस्याच्युत-
विजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षि-
तस्य कृतौ चतुर्दण्डीप्रकाशिकायां
सप्तमं ठायप्रकरणं संपूर्णम् ।

——o——

## अष्टमं गीतप्रकरणम् ।

एवं ठायप्रकरणे ठायाः सम्यङ् निरूपिताः ।
अष्टमेऽथ प्रकरणे गीतजातं निरूप्यते ॥ १ ॥

ननु गीयत इत्येवं व्युत्पत्त्याऽऽलापठाययोः ।
प्रबन्धानां च गीतत्वमस्ति तत्किं निरूप्यते ॥ २ ॥

इति चेदुच्यते गीतशब्दोऽयं योगतः पुनः ।
प्रबन्धालापठायानां वाचकः स्यात्तथाऽप्यसौ ॥ ३ ॥

रूढया सालगसूडाख्यगीतभेदैकवाचकः ।
अतः सालगसूडाख्यं गीतमत्र निरूप्यते ॥ ४ ॥

तत्र सालगसूडेति शब्दस्यार्थः प्रदर्श्यते ।
सूड इत्येष देशीयशब्दो गीतकवाचकः ॥ ५ ॥

स च सूडो द्विधा शुद्धच्छायालग इति क्रमात् ।
तत्र प्रथमः प्रकरणे शुद्धसूडोऽभिधास्यते ॥ ६ ॥

अथ च्छायालगः सूडच्छाया नाम समानता ।
शुद्धच्छाया शुद्धसाम्यं तां छायां लगतीत्ययम् ॥ ७ ॥

गच्छतीति मतस्तस्माच्छायालग इति स्मृतः ।
छायालगेति शब्दापभ्रंशः सालग इत्ययम् ॥ ८ ॥
शुद्धत्वं चात्र शास्त्रोक्तनियमेन समन्वयः ।
एवं सालगसूडेति शब्दस्यार्थः प्रदर्शितः ॥ ९ ॥
स च सालगसूडाख्यो ध्रुवादिः सप्तधा मतः ।
आद्यो ध्रुवस्ततो मट्ठः प्रतिमट्ठो निसारुकः ॥ १० ॥
अड्डतालस्ततो रास एकतालीति च क्रमात् ।
तत्रापि प्रथमोद्दिष्टध्रुवलक्षणमुच्यते ॥ ११ ॥
आदौ खण्डद्वयं कार्यं मिश्रमात्वेकधातुकम् ।
तत्खण्डद्वयमुद्ग्राहो विक्षिप्तस्तदनन्तरम् ॥ १२ ॥
उद्ग्राहस्वरतः किंचिदुच्चस्वरसमन्वितम् ।
खण्डं कुर्यादिदं खण्डत्रयं द्विर्गेयमिष्यते ॥ १३ ॥
ततो द्विखण्ड आभोगः स्तुत्यनामाङ्कितः स्मृतः ।
उच्चस्वरैकखण्डः स्यादाभोग इति केचन ॥ १४ ॥
उद्ग्राहस्याद्यखण्डे च न्यासो यत्र स तु ध्रुवः ।
तं च ध्रुवं द्व्यष्टविधं वदन्ति भरतादयः ॥ १५ ॥
एकादशाक्षरात्खण्डादेकैकाक्षरवर्धितैः ।
खण्डैर्ध्रुवा द्व्यष्टविधाः षड्विंशत्यक्षरावधि ॥ १६ ॥
जयन्तः शेखरोत्साहौ ततो मधुरनिर्मलौ ।
कुन्तलः कोमलश्चारो नन्दनश्चन्द्रशेखरः ॥ १७ ॥
कामदो विजयाख्यश्च कंदर्पो जयमङ्गलः ।
तिलको ललितश्चेति संज्ञास्तेषां क्रमादिमाः ॥ १८ ॥
आदितालेन शृङ्गारे जयन्तो गीयते बुधैः ।
शेखरो गीयते वीरे रसे निःसारुताळतः ॥ १९ ॥

उत्साहः प्रतिमट्टेन हास्ये तालेन गीयते ;
मधुरो भोगदो गेयः करुणे हयलीलया ॥ २० ॥
क्रीडातालेन शृङ्गारे गीयते निर्मलो ध्रुवः ।
लघुशेखरतालेन कुन्तलो गीयतेऽद्भुते ॥ २१ ॥
केरलो विप्रलम्भे च झोम्पतालेन गीयते ।
हर्षदो गीयते चारो वीरे निःसारुतालतः ॥ २२ ॥
नन्दनो वीरशृङ्गारे त्वेकतालेन गीयते ।
वीरे हास्ये च शृङ्गारे प्रतिमट्टेन गीयते ॥ २३ ॥
अभीष्टफलदः श्रोतृगातॄणां चन्द्रशेखरः ।
प्रतिमट्टेन शृङ्गारे गातव्यः कामदध्रुवः ॥ २४ ॥
हास्ये द्वितीयतालेन गायन्ति विजयध्रुवम् ।
कंदर्पो हास्यशृङ्गारकरुणेष्वादितालतः ॥ २५ ॥
क्रीडातालेन शृङ्गारे गातव्यो जयमङ्गलः ।
तिलको वीरशृङ्गारे त्वेकताल्या प्रगीयते ॥ २६ ॥
प्रतिमट्टेन शृङ्गारे गीयते ललितध्रुवः ।
स्याद्वर्णनियमः सर्वखण्डे खण्डद्वये यथा ॥ २७ ॥
इति ध्रुवं निरूप्याथ मट्टलक्षणमुच्यते ।
यतिद्वयं वैकयतिर्यत्रोद्ग्राहाख्यखण्डके ॥ २८ ॥
ध्रुवखण्डं ततस्तच्च द्विवारं गेय इष्यते ।
तद् गीत्वा ध्रुवमागत्य चाभोगो गीयते सकृत् ॥ २९ ॥
ध्रुवे न्यासस्ततः प्रोक्तः स मट्टो मट्टतालकः ।
जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ॥ ३० ॥
कलापः कमलश्चेति षड् भेदा मट्टके मताः ।
पद्मप्रकारो मट्टतालस्तेन गीतिश्च चियते ॥ ३१ ॥

वीरे जयप्रियो गेयो मट्ठेन जगणात्मना ।
आद्यन्तयोर्लघुर्मध्ये गुरुश्चेज्जगणः स्मृतः ॥ ३२ ॥
गेयो भगणमट्ठेन शृङ्गारे मङ्गलाभिधः ।
आदौ गुरुर्लघुद्वन्द्वं पश्चाच्चेद्भगणः स्मृतः ॥ ३३ ॥
युक्तः सगणमट्ठेन शृङ्गारे सुन्दरो मतः ।
आदौ लघुद्वयं चान्ते गुरुश्चेत्सगणो मतः ॥ ३४ ॥
ज्ञेयो रगणमट्ठेन वल्लभः करुणे रसे ।
आद्यन्तयोर्गुरुर्मध्ये लघुश्चेद्रगणो मतः ॥ ३५ ॥
विरामान्तेन नगणो मट्ठतालेन गीयते ।
हास्ये रसे कलापाख्यः कमलस्त्वद्भुते रसे ॥ ३६ ॥
विरामान्तद्रुतद्वन्द्वोपरि लध्वात्तमट्ठतः ।
नगणस्त्रिलघुः प्रोक्त इति मट्ठो निरूपितः ॥ ३७ ॥
अथोद्देशक्रमेणैव प्रतिमट्ठो निरूप्यते ।
मट्ठवत्प्रतिमट्ठस्य लक्ष्मोद्ग्राहादिके मतम् ॥ ३८ ॥
प्रतिमट्ठाभिधस्तालविशेषोऽत्र प्रकीर्तितः ।
प्रतिमट्ठश्चतुर्धा स्यादमरस्तारसंज्ञितः ॥ ३९ ॥
विचारः कुन्तनामा चेत्येतेषां लक्षणं ब्रुवे ।
अमरो गुरुणैकेन शृङ्गारे गीयते रसे ॥ ४० ॥
विरामान्तद्रुतद्वन्द्वाल्लघुद्वन्द्वेन गीयते ।
ताराख्यः प्रतिमट्ठोऽसौ रसयोर्वीररौद्रयोः ॥ ४१ ॥
लघुत्रयाद्विरामान्ताद्विचारः करुणे भवेत् ।
विराममध्यकलघुत्रयात्कुन्तोऽद्भुते स्मृतः ॥ ४२ ॥
प्रतिमट्ठं निरूप्यैवं निःसारोर्लक्षणं ब्रुवे ।
यद्वा निःसारुतालेन निःसारुरिति कीर्तिता ॥ ४३ ॥

वैकुन्दानन्दकान्तारसमरा वाञ्छितस्तथा ।
विशालश्चेति निःसारुगीतभेदाः षडीरिताः ॥ ४४ ॥
द्रुतद्वन्द्वोपरि लघुद्वन्द्वाद्वैकुन्द उच्यते ।
भवेदानन्द आनन्दो विरामान्तद्रुतद्वयात् ॥ ४५ ॥
विप्रलम्भे तु कान्तारो लघुना गुरुणा स्मृतः ।
लघुद्वयाद्विरामान्तात्समरो नाम कीर्तितः ॥ ४६ ॥
लघुद्वयाद्द्रुतद्वन्द्वाद्वाञ्छितः कथ्यते बुधैः ।
लघुद्रुतद्वये पुनर्लघुभिः स्याद्विशालकः ॥ ४७ ॥
निःसारुकं निरूप्यैवमट्टतालोऽभिधीयते ।
अट्टतालेन संयुक्तमट्टतालं प्रचक्षते ॥ ४८ ॥
निःशङ्कः शङ्कशीलौ च चारोऽथ मकरन्दकः ।
विजयश्चेति षड् भेदानट्टताले प्रचक्षते ॥ ४९ ॥
लगुरुभ्यां द्रुतद्वन्द्वान्निःशङ्को विस्मये भवेत् ।
लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः ॥ ५० ॥
शान्ते शीलो विरामान्ताद्द्रुतद्वन्द्वाल्लघुर्भवेत् ।
द्रुतद्वन्द्वोपरि लघुगुरुभ्यां चार ईरितः ॥ ५१ ॥
मकरन्दो द्रुतद्वन्द्वानन्तरं गुरुणा स्मृतः ।
विजयस्तु द्रुतद्वन्द्वानन्तरं लघुना स्मृतः ॥ ५२ ॥
इत्यट्टतालः कथितो रासकोऽथ निरूप्यते ।
निबद्धो रासतालेन रासकः स चतुर्विधः ॥ ५३ ॥
विनोदो वरदो नन्दः कम्बुकश्चेत्यनुक्रमात् ।
आलापान्ताद् ध्रुवपदाद्विनोदः कौतुके स्मृतः ॥ ५४ ॥

ध्रुवादालापमध्यात्तु वरदो देवतास्तृतौ ।
खण्डमाद्यं द्विखण्डस्योद्ग्राहस्यालापनिर्मितम् ॥ ५५ ॥
यस्यासौ रासको नन्दो गीयतेऽद्भुत एव सः ।
आलापादेर्ध्रुवपदात्कम्बुजः करुणे भवेत् ॥ ५६ ॥
सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना ।
इत्युक्त्वा रासकं गीतमेकताली निरूप्यते ॥ ५७ ॥
एकताली भवेदेकताल्या सा च त्रिधा स्मृता ।
रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ॥ ५८ ॥
सकृद्द्वियतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः ।
यस्यामसौ रमा नाम प्रथमो भेद इष्यते ॥ ५९ ॥
उद्ग्राहो द्विदलो यस्यामालापरचितोऽन्तरः ।
एकताली चन्द्रिका सा द्वितीयो भेद इष्यते ॥ ६० ॥
आलापपूर्वकोद्ग्राहा विपुलाख्यैकतालिका ।
आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
सप्तसालगसूडानामिति लक्षणमीरितम् ॥ ६१ ॥

इति श्रीमदद्वैतविद्याचार्यसाग्निचित्यसर्वतोमुखातिरात्र-
साग्निचित्याप्तवाजपेययाजिगोविन्ददीक्षितनागमा-
म्बिकावरद्वितीयनन्दनस्य साग्निचित्यसर्वक्रतुया-
जियज्ञनारायणदीक्षिताव्यवहितानुजस्याच्युत-
विजयराघवभूपालप्रेरितस्य वेङ्कटेश्वरदीक्षि-
तस्य कृतौ चतुर्दण्डीप्रकाशिकायां
गीतप्रकरणं संपूर्णम् ।

——०——

## प्रबन्धप्रकरणम् ।

एवं गीतप्रकरणे गीतं सम्यङ् निरूपितम् ।
नवमेऽथ प्रकरणे प्रबन्धोऽयं निरूप्यते ॥ १ ॥
ननु प्रबध्यत इति व्युत्पत्त्या नास्ति भिन्नता ।
गीतप्रबन्धयोस्तस्मात्पृथक्प्रकरणं वृथा ॥ २ ॥
उच्यते षड्भिरङ्गैश्च चतुर्भिर्धातुभिश्च यः ।
निबद्धः स्वरसंदर्भस्तस्मिन्नेव हि भूरिशः ॥ ३ ॥
प्रबन्ध इति लोकानां व्यवहारो निरीक्ष्यते ।
अतः प्रबन्धशब्दोऽत्र निरूढः पङ्कजादिवत् ॥ ४ ॥
गीतप्रबन्धयोरेवं भेदो यदि न कल्प्यते ।
कुतः सिध्येच्चतुर्दण्डी कुतो गोपालनायकः ॥ ५ ॥
प्रयुक्तं तु चतुर्दण्डीत्यतो गीतप्रबन्धयोः ।
भेदात्पृथक्प्रकरणं प्रबन्धार्थं प्रवर्तते ॥ ६ ॥
निबद्धः षड्भिरङ्गैश्च चतुर्भिर्धातुभिश्च यः ।
स्वरौघः स प्रबन्धः स्यादित्युक्तं तत्र कानि तु ॥ ७ ॥
षडङ्गानीति चेद्ब्रूमः स्वरश्च बिरुदं पदम् ।
तेनकः पाटतालौ चेत्येतान्यङ्गानि षट् पुनः ॥ ८ ॥
प्रबन्धस्याङ्गिनो ज्ञेयान्यन्यद्रत्नाकरे स्फुटम् ।
तत्र स्वरास्तु षड्जाद्याः शब्दा ध्वन्यात्मका इति ॥ ९ ॥
स्वरप्रकरणे प्रोक्तं प्रबन्धाङ्गस्वरास्त्विह ।
सरिगाद्याः सप्त वर्णाः षड्जादिध्वनिवाचकाः ॥ १० ॥
स्वराभिव्यक्तिसंयुक्ताः स्वरशब्देन कीर्तिताः ।
संबुद्ध्यन्तपदैर्येन नेतुर्यदुपबध्यते ॥ ११ ॥

वर्णनं धैर्यशौर्यादेर्विरुदं नाम तन्मतम् ।
क्रियाकारकसंबन्धरूपेण यदि वध्यते ॥ १२ ॥
तदेव धैर्यशौर्यादेर्वर्णनं तत्पदं स्मृतम् ।
अतो न संकराशङ्का विरुदस्य पदस्य च ॥ १३ ॥
तेनको नाम तेनेति शब्दस्य विकृतिर्भवेत् ।
विकृतत्वं च भाण्डीरभाषयाऽस्य समागतम् ॥ १४ ॥
सोऽयं तेनेति शब्दश्च तच्छब्दोपनिवन्धनः ।
तच्छब्दश्च भवेन्नित्यकल्याणब्रह्मवाचकः ॥ १५ ॥
ॐ तत्सदिति निर्देशात्तत्त्वमस्यादिवाक्यतः ।
तथा च यत्प्रबन्धेषु तेन तेनेति दृश्यते ॥ १६ ॥
तस्यायमर्थस्तेनायं ब्रह्मणा मङ्गलात्मना ।
प्रबन्धे लक्षित इति पाटो वाद्याक्षरोत्करः ॥ १७ ॥
रुद्रवीणासमुद्भूताः पाटास्तकतनादयः ।
शङ्खादिमुखवाद्योत्थाः पाटास्थुलथुगादयः ॥ १८ ॥
उरोवाद्यभवाः पाटा धित्थिधित्थकिणादयः ।
एवमन्येऽपि विज्ञेयाः पाटा लक्ष्यानुसारतः ॥ १९ ॥
तालस्तालप्रकरणे सप्रपञ्चोऽभिधास्यते ।
इत्यङ्गानि षडुक्तानि निरूप्यन्तेऽथ धातवः ॥ २० ॥
धातुर्नाम प्रबन्धस्यावयवः स चतुर्विधः ।
उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥ २१ ॥
आभोगश्चेत्यथैतेषां क्रमाल्लक्षणमुच्यते ।
प्रबन्धस्यादिमो भाग उद्ग्राहः परिकीर्तितः ॥ २२ ॥
आदावुद्गृह्यते गीतमनेनारभ्यते यतः ;
मिथोमेलनहेतुत्वादुद्ग्राहध्रुवयोर्द्वयोः ॥ २३ ॥

मेलापकः प्रबन्धस्य द्वितीयो भाग उच्यते ।
ध्रुवत्वाद्ध्रुवसंज्ञस्तु तृतीयोऽवयवः स्मृतः ॥ २४ ॥

प्रबन्धस्य यदाभोगं परिपूर्तिं करोति तत् ।
आभोगः स प्रबन्धस्य तुरीयावयवः स्मृतः ॥ २५ ॥

ध्रुवाभोगान्तरे जातो यतस्तेनान्तराभिधः ।
पञ्चमोऽप्यपरो धातुर्यद्यप्यस्ति तथाऽप्यसौ ॥ २६ ॥

गीतिष्वेव परं दृष्टस्त्रिखण्डेष्वेव तेष्वपि ।
उपयुक्ताः प्रबन्धस्य चत्वारो धातवस्ततः ॥ २७ ॥

षडङ्गैर्लक्षितैरित्थं चतुर्भिर्धातुभिश्च यः ।
निबद्धः स्वरसंदर्भः स प्रबन्ध इति स्थितम् ॥ २८ ॥

स च पञ्चविधः प्रोक्तो मेदिनीजातिमानथ ।
आनन्दिनीजातिमांश्च दीपनीजातिमांस्तथा ॥ २९ ॥

भावनीजातिमांश्चाथ तारावल्याख्यजातिमान् ।
तत्र स्वरादिभिः षड्भिरङ्गैर्युक्ता तु मेदिनी ॥ ३० ॥

अङ्गपञ्चकसंयुक्ता जातिरानन्दिनी स्मृता ।
चतुरङ्गयुता जातिर्दीपनीति प्रकीर्तिता ॥ ३१ ॥

अङ्गत्रयवती जातिराख्याता भावनी बुधैः ।
जातिरङ्गद्वयोपेता तारावल्यभिधीयते ॥ ३२ ॥

एकाङ्गसंगता जातिर्न निबन्धेषु विद्यते ।
एताभिर्जातिभिर्युक्ता ये प्रबन्धास्तु पञ्चभिः ॥ ३३ ॥

ते तत्तज्जातिमत्संज्ञां भजन्तीति व्यवस्थितिः ।
परित्यक्ताङ्गनामानि पञ्चाङ्गाद्यासु जातिषु ॥ ३४ ॥

तत्तज्जातिप्रबन्धानां लक्षणेषु प्रचक्ष्महे ।
पुनः प्रबन्धस्त्रिविधो मतङ्गाद्यैरुदीरितः ॥ ३५ ॥

द्विधातुकस्त्रिधातुश्च चतुर्धातुरिति क्रमात् ।
अथ सांगीतिकैरेषा परिभाषाऽवधार्यताम् ॥ ३६ ॥
प्रबन्धमात्र उद्ग्राहध्रुवौ द्वौ नियतौ स्मृतौ ।
विनोद्ग्राहं प्रबन्धस्यारम्भ एव न संभवेत् ॥ ३७ ॥
ध्रुवत्वमेव नास्त्येतद्ध्रुवस्य च विवर्जने ।
एवं स्थिते प्रबन्धोऽयं द्विधातुरिति यत्र तु ॥ ३८ ॥
तत्रोद्ग्राहध्रुवौ ग्राह्यौ मेलापाभोगवर्जनात् ।
अथोच्यते चतुर्धातुः प्रबन्ध इति यत्र तु ॥ ३९ ॥
तत्रोद्ग्राहादयो ग्राह्याश्चत्वारोऽपि च धातवः ।
यत्र तूक्तं प्रबन्धोऽयं त्रिधातुरिति तत्र किम् ॥ ४० ॥
मेलापकस्य संत्याग आभोगस्येति संशयः ।
भवत्येव तथाऽप्यत्र प्रबन्धेषु त्रिधातुषु ॥ ४१ ॥
विनाऽऽभोगं प्रबन्धस्य त्रिधातोः क्वाप्यदर्शनात् ।
त्यागो मेलापकस्यैव वेदितव्यस्त्रिधातुषु ॥ ४२ ॥
संप्रदायोऽधुना कश्चित्प्रबन्धेषु प्रदृश्यते ।
इह प्रबन्धा ये युक्ताः पृथगाभोगधातुना ॥ ४३ ॥
तेष्वाभोगं द्विधा कृत्वा पूर्वार्धं तालवर्जितम् ।
आलापरूपं कार्यं तल्लोके वाक्यमितीर्यते ॥ ४४ ॥
द्वितीयार्धं तालयुक्तं कर्तव्यमिति निर्णयः ।
तत्राद्यार्धे प्रबन्धस्य गातुश्चाख्यां प्रयोजयेत् ॥ ४५ ॥
द्वितीयार्धे तु वर्ण्यस्य नामधेयमिति स्थितिः ।
आलापधातोः सर्वत्र स्वरूपमिदमेव हि ॥ ४६ ॥
लक्ष्ये त्विदानीं कैवाडप्रबन्धादिषु केषुचित् ।
आभोगा वर्तमाना ये तेष्वेवोक्तप्रकारतः ॥ ४७ ॥

आलापखण्डानालापरूपखण्डत्वमिष्यते ।
तच्च सर्वत्र कर्तव्यं प्रबन्धाभोगधातुषु ॥ ४८ ॥

पुनः प्रबन्धो निर्युक्तानिर्युक्तत्वेन च द्विधा ।
निर्युक्तः स भवेच्छन्दस्तालरागादिकस्य यः ॥ ४९ ॥

नियमेनोपबद्धः स्यात्तस्यैव नियमं विना ।
निबद्धः स्यादनिर्युक्तश्छन्दस्तालादिकस्य च ॥ ५० ॥

नियमस्त्वमुकेनैव च्छन्दसा त्वमुनैव च ।
तालेनामुकरागेणाप्यनयैव च भाषया ॥ ५१ ॥

प्रबन्धोऽयं निबद्धः स्यादित्येवंरूप उच्यते ।
एवं नियमराहित्यमेवानियम ईरितः ॥ ५२ ॥

तत्र तावत्प्रबन्धानां द्विधातुत्वं त्रिधातुता ।
निर्युक्तत्वं तदन्यत्वं तत्तल्लक्ष्म तु वक्ष्यते ॥ ५३ ॥

इदानीं तु प्रबन्धानां लक्षणं वक्तुमादितः ।
मेदिन्यादिक्रमेणैव तत्तज्जातिमतोऽपि च ॥ ५४ ॥

प्रबन्धानुद्दिशाम्यत्र प्रबन्धसुखबुद्धये ।
श्रीरङ्गः श्रीविलासश्च पञ्चभङ्गिरतः परम् ॥ ५५ ॥

पञ्चाननोमातिलकौ करणं सिंहलीलकः ।
मेदिनीजातिमन्तोऽमी प्रबन्धाः सप्त कीर्तिताः ॥ ५६ ॥

पञ्चतालेश्वरो वर्णस्वरो वस्त्वभिधानकः ।
विजयस्त्रिपदाख्यश्च ततो हरविलासकः ॥ ५७ ॥

चतुर्मुखः पद्धडी श्रीवर्धनो हर्षवर्धनः ।
आनन्दिनीजातिमन्तः प्रबन्धा दश कीर्तिताः ॥ ५८ ॥

सुदर्शनः स्वराङ्कश्च त्रिभङ्गिश्चैव कन्दुकः ।
वदनं चेति पञ्चैते दीपनीजातिसंयुताः ॥ ५९ ॥

वर्णो गद्यं ततः कन्दः कैवाडश्चाङ्कचारिणी ।
वर्तन्यार्या च गाथा च ततः क्रौञ्चपदः स्मृतः ॥ ६० ॥
कलहंसस्तोटकश्च हंसलीलश्चतुष्पदी ।
वीरश्रीर्मङ्गलाचारो दण्डकश्चेत्यमी पुनः ॥ ६१ ॥
द्वयष्ट प्रबन्धा उद्दिष्टा भावनीजातिसंगताः ।
एला ढेङ्की झोम्बडश्च लम्भरासैकतालिकाः ॥ ६२ ॥
चक्रवाकः स्वरार्थश्च मातृका ध्वनिकुट्टिनी ।
त्रिपदी षट्पदी चैव झम्पटश्चर्चरी तथा ॥ ६३ ॥
चर्या च राहडी चैव धवलो मङ्गलस्तथा ।
ओवी लोली ढोल्लरी च दन्ती द्वाविंश इत्यमी ॥ ६४ ॥
तारावलीजातिमन्तः प्रबन्धाः परिकीर्तिताः ।
इत्येकजातिमन्तोऽमी प्रबन्धाः षष्टिरीरिताः ॥ ६५ ॥
अथ प्रबन्धाः कीर्त्यन्ते जातिद्वयसमन्विताः ।
हयलीलेति च तथा गजलीलेत्युभावपि ॥ ६६ ॥
तारावलीदीपनीभ्यां समेताविति निर्णयः ।
द्विपदी च द्विपथको वृत्तं चेति त्रयस्त्वमी ॥ ६७ ॥
प्रबन्धा भावनीतारावलीजातिद्वयान्विताः ।
घटनामा प्रबन्धस्तु दीपनीभावनीयुतः ॥ ६८ ॥
इति द्विजातिमन्तोऽमी षट् प्रबन्धाः प्रकीर्तिताः ।
तालार्णवस्तथा रागकदम्बश्चेत्युभौ स्मृतौ ॥ ६९ ॥
मेदिनीप्रमुखाभिश्च पञ्चभिर्जातिभिर्युतौ ।
अथोद्दिष्टप्रबन्धानां क्रमाल्लक्षणमुच्यते ॥ ७० ॥
श्रीरङ्गस्य प्रबन्धस्य चतस्रः खण्डिकाः स्मृताः ।
प्रतिखण्डिकमेकैको रागस्तालश्च वाञ्छितः ॥ ७१ ॥

प्रतिखण्डिकमप्यन्ते प्रयोज्यं नियमात्पदम् ।
तदन्यानि स्वरादीनि पञ्चाङ्गान्यैच्छिकक्रमात् ॥ ७२ ॥
प्रयोज्यान्यत्र चाद्यार्धं प्रतिखण्डिकमस्ति यत् ।
स उद्ग्राहो द्वितीयार्धं ध्रुव इत्येष निर्णयः ॥ ७३ ॥
न स्तो मेलापकाभोगावाभोगविरहेऽपि च ।
तुरीयायाः खण्डिकाया अन्ते नामाङ्कनं पदैः ॥ ७४ ॥
गातुर्नेतुःप्रबन्धानां कार्यं तेन द्विधातुकः ।
प्रबन्धोऽयं भवेच्छन्दस्तालाद्यनियमेन च ॥ ७५ ॥
निबद्धत्वादनिर्युक्त इति श्रीरङ्गलक्षणम् ।
श्रीविलासप्रबन्धस्य कर्तव्याः पञ्च खण्डिकाः ॥ ७६ ॥
प्रतिखण्डिकमेकैको रागस्तालश्च वाञ्छितः ।
प्रतिखण्डिकमप्यन्ते प्रयोक्तव्याः स्वराः परम् ॥ ७७ ॥
ऐच्छिकेन क्रमेणैव योज्यं शिष्टाङ्गपञ्चकम् ।
द्विधातुत्वादिकं सर्वं श्रीरङ्गवदिति स्थितिः ॥ ७८ ॥
पञ्चभङ्गिप्रबन्धस्य खण्डिके द्वे प्रकल्पयेत् ।
प्रतिखण्डिकमेकैको रागस्तालश्च वाञ्छितः ॥ ७९ ॥
तेनकोऽन्ते प्रयोक्तव्यः प्रतिखण्डिकमत्र तु ।
शिष्टमन्यत्परिज्ञेयं श्रीरङ्गाख्यप्रबन्धवत् ॥ ८० ॥
पञ्चभङ्गिरसावेव द्वयोः खण्डिकयोः पृथक् ।
अन्ते पदान्वितः स्याच्चेत्तदा पञ्चाननो मतेत् ॥ ८१ ॥
अन्यत्पूर्ववदुन्नेयमथोमातिलकाभिधे ।
प्रबन्धे खण्डिकास्तिस्रः कर्तव्याः प्रतिखण्डिकम् ॥ ८२
रागस्तालस्तथैकैको वाञ्छितः प्रतिखण्डिकम् ।
अन्ते तु बिरुदं योज्यमन्यच्छ्रीरङ्गवत्स्मरेत् ॥ ८३ ॥

श्रीरङ्गाद्यास्तु पद्मोमातिलकान्ता इमे स्मृताः ।
षड्भिरङ्गैर्निबद्धत्वान्मेदिनीजातिसंगताः ॥ ८४ ॥

अथोद्देशक्रमप्राप्तं करणं लक्ष्यते स्फुटम् ।
इष्टस्वरे प्रबन्धस्यारम्भो मोक्षोंऽशकस्वरे ॥ ८५ ॥

रासस्तालो द्रुताख्यस्तु लय एतैः समेतता ।
ज्ञेयं करणसामान्यलक्ष्म तच्चाष्टधा मतम् ॥ ८६ ॥

स्वराद्यं पाटपूर्वं च बन्धाद्यं च पदादिमम् ।
तेनाद्यं बिरुदाद्यं च चित्राद्यं मिश्रपूर्वकम् ॥ ८७ ॥

एतेषां लक्षणान्यष्टकरणानां क्रमाद्ब्रुवे ।
यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ॥ ८८ ॥

आभोगः स्याद्गातृनेतृप्रबन्धाह्वयचिह्नितः ।
तत्तु स्वराद्यकरणं तद्वदन्याद्यपि स्फुटम् ॥ ८९ ॥

किं तूद्ग्राहध्रुवस्थाने तेषां भेदोऽस्ति तद् ब्रुवे ।
स्यात्पाटकरणं बद्धं हस्तपाटयुतैः स्वरैः ॥ ९० ॥

क्रमव्यत्यासभेदेन तदपि द्विविधं स्मृतम् ।
आदौ स्वरास्ततो हस्तपाटश्चेत्क्रम उच्यते ॥ ९१ ॥

प्रथमं हस्तपाटोऽथ स्वराश्चेत्तदुदीरितम् ।
व्यत्यासपाटकरणं मतङ्गभरतादिभिः ॥ ९२ ॥

स्वरैर्मुरजपाटैश्च यत्रोद्ग्राहध्रुवावुभौ ।
क्रमेणोपनिबध्येते तद्बन्धकरणं विदुः ॥ ९३ ॥

स्वरैः पदैर्विरच्येते यत्रोद्ग्राहध्रुवौ क्रमात् ।
तदा पदाद्यं करणं मन्यन्ते गीतकोविदाः ॥ ९४ ॥

यत्रोद्ग्राहः स्वरैर्बद्धस्तेनकैस्तु ध्रुवो भवेत् ।
तत्तेनकरणं नाम प्रबन्धं परिचक्षते ॥ ९५ ॥

स्वरैश्च विरुदैः स्यातां यत्रोद्ग्राहध्रुवौ क्रमात् ।
विरुदाद्यं तदा प्रोक्तं करणं लक्ष्यकोविदैः ॥ ९६ ॥

स्वरैश्च हस्तपाटैश्च यत्रोद्ग्राहो विरच्यते ।
पाटैर्मुरजसंभूतैः पदैश्च स्यादथ ध्रुवः ॥ ९७ ॥

तच्चित्रकरणं नाम प्रबन्धं सूरयो विदुः ।
स्वरैः पाटैस्तेनकैश्च यत्रोद्ग्राहो निबध्यते ॥ ९८ ॥

तैरेव चेद्ध्रुवोऽपि स्यात्तन्मिश्रकरणं विदुः ।
ननु चित्रस्य मिश्रस्य को भेद इति चेच्छृणु ॥ ९९ ॥

तिलतण्डुलवज्जातो मिथोऽवयवसंकरः ।
चित्रत्वं मिश्रता नाम भवेत्क्षीराम्बुनोरिव ॥ १०० ॥

मिथोऽवयवसांकर्यमिति भेदस्तयोर्द्वयोः ।
निरूपितानि करणान्येवं नवविधान्यपि ॥ १०१ ॥

व्यत्यासपाटकरणप्रबन्धेन सह स्फुटम् ।
नवैतानि त्रिधातुत्वात्प्रत्येकं कालभेदतः ॥ १०२ ॥

मङ्गलारम्भकाद्याख्याविशेषैः सप्तविंशतिः ।
इत्युक्तं शार्ङ्गिणा तत्तु व्यामोहैकप्रयोजनम् ॥ १०३ ॥

नियुक्तोऽयं प्रबन्धः स्यात्तालस्य नियमो यतः ।
य आदिताल इत्युक्त एकेन लघुना युतः ॥ १०४ ॥

रासताल इति प्रोक्तः स यथार्थेति निर्णयः ।
मेलापकस्य विरहात्त्रिधातुरिति कीर्तितः ॥ १०५ ॥

स्वरादीनां षडङ्गानां करणेषु नवस्वपि ।
पर्यायेण निविष्टत्वान्मेदिनीशानिमानयम् ॥ १०६ ॥

अथोद्देशक्रमप्राप्तः सिद्धलम्भो निरूप्यते ।
स्वरैः पाटैश्च विरुदैस्तेनकैश्च क्रमेण च ॥ १०७ ॥

विरच्यते सिंहलीलनाम्ना तालेन स स्मृतः ।
प्रबन्धः सिंहलीलाख्यः सिंहलीले द्रुतास्त्रयः ॥ १०८ ॥
आद्यन्तयोर्लघूपेतास्त्वत्र च स्वरपाटकैः ।
उद्ग्राहं कल्पयेद्धातुं विरुद्धैस्तेनकैर्ध्रुवम् ॥ १०९ ॥
पदैः कुर्यादथाभोगं तेनायं स्यात्त्रिधातुकः ।
निर्युक्तस्तालनियमादङ्गैः षड्भिः स्वरादिभिः ॥ ११० ॥
निबद्धत्वात्स्वरत्येष मेदिनीजातिसंगतः ।
तदेवं मेदिनीजातिप्रबन्धाः सप्त लक्षिताः ॥ १११ ॥
आनन्दिनीजातिमतामथोद्दिष्टः पुरा हि यः ।
पञ्चतालेश्वरो नाम प्रबन्धः स निरूप्यते ॥ ११२ ॥
अतालः प्रथमं रागालापः स्यात्तदनन्तरम् ।
परस्परं भिन्नधातुमातुकं पदपञ्चकम् ॥ ११३ ॥
चच्चत्पुटाख्यतालेन युक्तं द्विर्गेयमिष्यते ।
अन्ते प्रतिपदं चच्चत्पुटेनैव समन्वितान् ॥ ११४ ॥
स्वरानैच्छिकपाटांश्च क्रमेण परिकल्पयेत् ।
पञ्चमस्य पदस्यान्ते पूर्वं पाटास्ततः स्वराः ॥ ११५ ॥
गेया इति ततस्तत्र व्युत्क्रमः स्वरपाटयोः ।
एवंविधानां पञ्चानां पदानां समनन्तरम् ॥ ११६ ॥
चच्चत्पुटस्य तालस्यैवावृत्तद्वयमानतः ।
पाटैः पटहसंभूतैरन्तरं परिकल्पयेत् ॥ ११७ ॥
ततश्चाचपुटाख्यानतालेन पदपञ्चकम् ।
परस्परं भिन्नधातुयुक्तं द्विर्गेयमिष्यते ॥ ११८ ॥
अन्ते प्रतिपदं चाचपुटेनैव युतान्स्वरान् ।
पाटांश्च पूर्ववद्गायेत्पञ्चमस्य पदस्य तु ॥ ११९ ॥

अन्ते स्वराणां पाटानां व्युत्क्रमः पूर्ववद्भवेत् ।
ततश्चाचपुटस्यैव त्वावृत्तद्वयमानतः ॥ १२० ॥
हौडुक्कपाटैः कलयेदन्तरं तदनन्तरम् ।
पट्पितापुत्रकाख्येन तालेन पदपञ्चकम् ॥ १२१ ॥
पूर्ववद्रचयेदन्ते तथा प्रतिपदं स्वराः ।
पाटाश्च क्रमतो गेयाः पट्पितापुत्रकान्विताः ॥ १२२ ॥
पञ्चमस्य पदस्यान्ते पूर्ववद्व्युत्क्रमस्तयोः ।
पट्पितापुत्रकस्याथ तालस्यावृत्तयुग्मतः ॥ १२३ ॥
अन्तरं शङ्खसंभूतैः पाटैर्विरचयेत्ततः ।
संपक्वेष्टाकतालेन पट् पदानि प्रकल्पयेत् ॥ १२४ ॥
द्विर्गानं च मिथोभिन्नधातुत्वादि च पूर्ववत् ।
पूर्ववच्च प्रतिपदमन्ते स्युः स्वरपाटकाः ॥ १२५ ॥
पाटैर्मुरजसंभूतैरन्तरं परिकल्पयेत् ।
तत उद्घट्टतालेनाभोगं द्रुतलयान्वितम् ॥ १२६ ॥
गातृनेतृप्रबन्धाख्याभूषितं परिकल्पयेत् ।
अत्राभोगे द्रुतलयाख्यानादन्येषु धातुषु ॥ १२७ ॥
मध्यो विलम्बितो वा स्याल्लय इत्यवगम्यताम् ।
आभोगान्ते च कुर्वीत तेनकं तदनन्तरम् ॥ १२८ ॥
प्रबन्धादिस्थितालापे मोक्ष एवंविधस्तु यः ।
पञ्चतालेश्वरो नाम सोऽयमन्वर्थसंज्ञकः ॥ १२९ ॥
स च द्वेधा वीररसे गीतो वीरावतारकः ।
शृङ्गारे तु रसे गीतः शृङ्गारतिलकः स्मृतः ॥ १३० ॥
तालप्रकरणे चच्चत्पुटादिर्लक्षयिष्यते ।
तत्र च प्रतितालं यदाद्यमस्ति पदद्वयम् ॥ १३१ ॥

उद्ग्राहः स तदन्यानि पदानि स्याद्ध्रुवस्ततः ।
अनन्तरस्तदाभोगश्चतुर्धातुरयं ततः ॥ १३२ ॥

नन्वन्तरस्य नियमो गीतेष्वेव पुरोदितः ।
सत्यं वचनसामर्थ्यात्प्रबन्धेष्वपि कुत्रचित् ॥ १३३ ॥

भविष्यत्यन्तरो विद्या निषादस्थपतेरिव ।
तालानां नियमाच्चैव निर्युक्त इति कीर्त्यते ॥ १३४ ॥

पञ्चाङ्गो विरुदाभावादानन्दिन्याख्यजातिमान् ।
अथ वर्णस्वरं ब्रूमो यत्र स्यादैच्छिकः क्रमः ॥ १३५ ॥

स्वराणामपि पाटानां पदानां तेनकस्य च ।
तेनके च भवेन्मोक्षः स वर्णस्वर उच्यते ॥ १३६ ॥

चतुर्धा स स्वरस्यादौ विन्यासः प्रथमो भवेत् ।
पाटानामादिविन्यासो द्वितीयः परिकीर्तितः ॥ १३७ ॥

पदानामादिविन्यासात्तृतीयो भेद उच्यते ।
तेनानामादिविन्यासाच्चतुर्थो भेद इष्यते ॥ १३८ ॥

एकस्मिन्नादिविन्यस्ते स्वरादिषु चतुर्ष्वपि ।
तदन्येषां त्रयाणां स्याद्विन्यासो वाञ्छितक्रमात् ॥ १३९ ॥

अत्र स्वरादिषु द्वाभ्यामुद्ग्राहं परिकल्पयेत् ।
द्वाभ्यां ध्रुवमथाभोगं पदैः कुर्यादतस्त्रयम् ॥ १४० ॥

स्यात्त्रिधातुरनिर्युक्तस्तालाद्यनियमात्मकः ।
पञ्चाङ्गो विरुदाभावादानन्दिन्याख्यजातिमान् ॥ १४१ ॥

एवं वस्तुप्रबन्धस्य पादान्न्यायात्प्रकल्पयेत् ।
तेष्वाद्ये च तृतीये च पञ्चमे च पृथक्पृथक् ॥ १४२ ॥

एकैकलघुवर्णाख्यमात्राः पञ्चदश स्मृताः ।
द्वितीयतुर्ययोरङ्घ्र्योर्मात्रा द्वादश कीर्तिताः ॥ १४३ ॥

एतेषु पञ्चपादेष्वप्याद्यं पादद्वयं पुनः ।
प्रथमार्धं स्मृतं तच्च स्वरपाटान्तमिष्यते ॥ १४४ ॥
शिष्टं पादत्रयं प्रोक्तमपरार्धमिदं पुनः ।
कर्तव्यं स्वरतेनान्तं ततो दोधकनामकम् ॥ १४५ ॥
वृत्तं कुर्यात्तु तल्लक्ष्म च्छन्दःशास्त्रे निरूपितम् ।
'दोधकवृत्तमिदं भभभा गौ'
इदमेवास्य वृत्तस्य लक्ष्मोदाहरणं तथा ॥ १४६ ॥
अत्रोद्ग्राहस्तेनकान्तमर्धद्वयमथ ध्रुवः ।
दोधकः स्यादथाभोगस्तेनोक्तोऽयं त्रिधातुकः ॥ १४७ ॥
तालादिनियमाभावादनिर्युक्तश्च पञ्चभिः ।
अङ्गैरविरुद्दैर्योगादानन्दिन्याख्यजातिमान् ॥ १४८ ॥
विजयाख्यप्रबन्धस्य लक्षणं त्वथ वक्ष्महे ।
तेनैः स्वरैर्य उद्ग्राहे ध्रुवे पाटैः पदैरपि ॥ १४९ ॥
पत्रान्तरैस्त्वाभोगे ज्ञेयो विजयतालतः ।
विजयाख्यस्त्रिधातुः स निर्युक्तो नियतत्वतः ॥ १५० ॥
पञ्चाङ्गो विरुदाभावादानन्दिन्याख्यजातिमान् ।
त्रिपदाख्यप्रबन्धस्य लक्ष्म सम्यक्प्रचक्ष्महे ॥ १५१ ॥
यत्र पाटैर्भवेदेकः पादोऽथ विरुदैः परः ।
स्वरैरन्यस्तु सोऽन्वर्थसंज्ञकस्त्रिपदाह्वयः ॥ १५२ ॥
अत्राद्यपाद उद्ग्राहो द्वितीयस्तु ध्रुवः स्मृतः ।
आभोगस्तु पदैः कार्यस्ततोऽप्येष त्रिधातुकः ॥ १५३ ॥
अनिर्युक्तश्च तालादेरस्यानियमत्वतः ।
पञ्चाङ्गस्तेनकाभावादानन्दिन्याख्यजातिमान् ॥ १५४ ॥
एमो हरविलासस्य लक्षणं लक्ष्यसंमतम् ।
पदैश्च विरुदैराद्यः खण्डो यत्र प्रबध्यते ॥ १५५ ॥

पाटैर्द्वितीयखण्डोऽथ तेनकैस्तु तृतीयकः ।
सोऽयं हरविलासाख्यः प्रबन्धः परिकीर्त्यते ॥ १५६ ॥

अथाद्यखण्ड उद्ग्राहो द्वितीयकतृतीयकौ ।
ध्रुवः पदान्तरैः कार्य आभोगोऽतस्त्रिधातुकः ॥ १५७ ॥

तालादिनियमाभावादनिर्युक्तश्च कीर्तितः ।
पञ्चाङ्गश्च स्वराभावादानन्दिन्याख्यजातिमान् ॥ १५८ ॥

चतुर्मुखप्रबन्धस्य लक्ष्म सम्यक्प्रचक्ष्महे ।
यत्र तु स्थायिवर्णेन स्वरैरेकोऽङ्घ्रिरिष्यते ॥ १५९ ॥

ततस्त्वारोहिवर्णेन पाटैरङ्घ्रिर्द्वितीयकः ।
ततोऽवरोहिवर्णेन पदैरङ्घ्रिस्तृतीयकः ॥ १६० ॥

ततः संचारिवर्णेन तेनैरङ्घ्रिस्तुरीयकः ।
उद्ग्राहे च समाप्तिः स्यात्स चतुर्मुख उच्यते ॥ १३१ ॥

उक्तं स्थाय्यादिवर्णानां लक्ष्म रत्नाकरे स्फुटम् ।
गानक्रियोच्यते वर्णः सा चतुर्धा निरूपिता ॥ १६२ ॥

स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ।
स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य यः ॥१६३॥

स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ।
एतत्संमिश्रणाद्वर्णः संचारी तु भवेदिति ॥ १६४ ॥

अत्राद्यपादद्वितयमुद्ग्राह इति कीर्त्यते ।
द्वितीयं पादयुगलं ध्रुव इत्यभिधीयते ॥ १३५ ॥

पदान्तरैः स्यादाभोगस्तेनोक्तोऽयं त्रिधातुकः ।
तालादिनियमाभावादनिर्युक्तश्च कीर्तितः ॥ १६६ ॥

पञ्चाङ्गो विरुदाभावादानन्दिन्याख्यजातिमान् ।
पञ्चाङ्गीति प्रबन्धोऽयं प्रबोधाय निरूप्यते ॥ १६७ ॥

स्वरान्तैर्विरुदैर्यस्याः प्रथमार्धं विरच्यते ।
पाटान्तैर्विरुदैश्चैव द्वितीयार्धं निबध्यते ॥ १६८

यस्याश्च प्रतिपादं स्यादन्तेऽनुप्राससंभवः ।
छन्दसा पद्धडीनाम्ना युक्ता सा पद्धडी मता ॥ १६९ ॥

पद्धडीच्छन्दसो लक्ष्म च्छन्दःशास्त्रे निरूपितम् ।

"षोडश मात्राः पादे पादे
यत्र भवन्ति निरस्तविवादे ।
पद्धडिका जगणेन वियुक्ता
चरमगुरुः सा सद्भिरिहोक्ता ॥"

इदमेव च पद्धड्या उदाहरणलक्षणे ॥ १७० ॥

तस्याद्यमर्धमुद्ग्राहो द्वितीयार्धं ध्रुवः स्मृतः ।
आभोगश्च पदैः कार्यस्तेनायं स्यात्त्रिधातुकः ॥ १७१ ॥

निर्युक्तश्च यतश्छन्दोनियमोऽतेनकस्ततः ।
आनन्दिनीजातिमांश्चाप्यङ्कपञ्चकसंगतः ॥ १७२ ॥

अथ श्रीवर्धनो नाम प्रबन्धोऽयं निरूप्यते ।
यत्रोद्ग्राहस्तु विरुदैः पदैरपि भवेत्क्रमात् ॥ १७३ ॥

पदैः स्वरध्रुवः स्याच्चेत्स श्रीवर्धन उच्यते ।
पदान्तरैरिहाभोगः कार्यस्तेन त्रिधातुकः ॥ १७४ ॥

प्रबन्धोऽयमनिर्युक्तस्तालादिनियमाविधेः ।
पञ्चाङ्गस्तेनकामाख्यादानन्दिन्याख्यजातिमान् ॥ १७५ ॥

अथोद्ग्राहक्रमप्राप्तो लक्ष्यते हर्षवर्धनः ।
पदैश्च विरुदैर्यस्मिन्नुद्ग्राहो विनिबध्यते ॥ १७६ ॥

स्वरैः पाटैर्ध्रुवश्चैव स स्मृतो हर्षवर्धनः ।
[illegible] र्ध [illegible] पदत्र च ॥ १७७ ॥

त्रिभिरंशैस्त्रिभिस्तालैस्तृतीयो भेद उच्यते ।
त्रिभिर्वृत्तैरन्वितस्त्वाश्चतुर्थो भेद इष्यते ॥ १९० ॥
तथा देवद्वयस्तुत्या पञ्चमो भेद उच्यते ।
एतेषु पञ्चभेदेषु योज्यं सामान्यलक्षणम् ॥ १९१ ॥
यथायोगमिहोह्येय मुद्ग्राहादिविभाजनम् ।
आभोगश्च पदैः कार्यस्तेनायं स्यात्त्रिधातुकः ॥ १९२ ॥
छन्दस्तालादिनियमात्त्वेष निर्युक्त उच्यते ।
दीपनीजातिमांश्चापि लोपाद्बिरुदतेनयोः ॥ १९३ ॥
निरूप्यते कन्दुकोऽथ यत्राद्यचरणः पदैः ।
पाटैर्द्वितीयचरणो विरुदैश्च तृतीयकः ॥ १९४ ॥
उद्ग्राहे च समाप्तिश्च स कन्दुक इति स्मृतः ।
अत्राद्यपादद्वितयमुद्ग्राह इति कथ्यते ॥ १९५ ॥
ध्रुवस्तृतीयपादे स्यात्पदैराभोगकल्पना ।
तत्त्रिधातुरनिर्युक्तस्तालादिनियमो न यत् ॥ १९६ ॥
दीपनीजातिमांश्चापि स्वरतेनकवर्जनात् ।
निरूप्यतेऽथ वदनप्रबन्धस्येह लक्षणम् ॥ १९७ ॥
प्रबन्धोऽयं त्रिधा प्रोक्तस्तत्राद्यो वदनाभिधः ।
अथोपवदनाभिख्यः स्याद्वस्तुवदनाह्वयः ॥ १९८ ॥
त्रयाणामपि चैतेषां क्रमाल्लक्षणमुच्यते ।
छगणौ पगणौ चैव दगणश्चेत्यमी त्रयः ॥ १९९ ॥
मात्रागणाः स्युः प्रथमे पाद उद्ग्राहसंज्ञके ।
तादृगेव द्वितीयाङ्घ्रिः कर्तव्यो ध्रुवसंज्ञकः ॥ २०० ॥
विशेषस्त्वत्र चरणे स्वरपाटं प्रकल्पयेत् ।
पदान्तैरथाभोग इत्येवं वदनं स्मृतम् ॥ २०१ ॥

एवमानन्दिनीजातिप्रबन्धा दश वर्णिताः ।
अथ यो दीपनीजातिप्रबन्धेष्वपि पञ्चसु ॥ १७८ ॥
सुदर्शनः पुरोद्दिष्टः स प्रबन्धो निरूप्यते ।
यत्रोद्ग्राहः पदैः क्लृप्तो बिरुदैस्तेनकैर्ध्रुवः ॥ १७९ ॥
पदान्तरैस्तथाऽऽभोगस्तं वदन्ति सुदर्शनम् ।
त्रिधातुकः प्रबन्धोऽयमनिर्युक्तस्तथैव च ॥ १८० ॥
तालादिनियमाभावात्स्वरपाटविवर्जितैः ।
अङ्गैश्चतुर्भिर्यद्वत्याद्दीपनीजातिमान्स्मृतः १८१ ॥
अथोच्यते स्वराङ्कस्य प्रबन्धस्येह लक्षणम् ।
यत्रोद्ग्राहः पदैर्बद्धः स्वरैर्मेलापकस्तथा ॥ १८२ ॥
ध्रुवश्च बिरुदैस्तत्र तूद्ग्राहे ताल एककः ।
मेलापके तु द्वौ तालौ ध्रुवे तालास्त्रयः पुनः ॥ १८३ ॥
स स्वराङ्क इति प्रोक्तो गातव्यो मालवश्रिया ।
आभोगः पूर्ववत्कार्यश्चतुर्धातुरसत्त्वयम् ॥ १८४ ॥
निर्युक्तो रागनियमात्पाटतेनकवर्जितैः ।
चतुरङ्कैर्नियद्धत्वाद्दीपनीजातिमान्स्मृतः ॥ १८५ ॥
अथोच्यते त्रिभङ्ग्याख्यप्रबन्धस्येह लक्षणम् ।
स्वरैः पाटैः पदैश्चैव क्रमेण विनिपद्यते ॥ १८६ ॥
सामान्यलक्षणं तस्य स च पञ्चविधः स्मृतः ।
त्रिभङ्गिताले तु लघुद्वयं गुरुरथोच्यते ॥ १८७ ॥
इत्येवंलक्षणोपेतत्रिभङ्गीतालसंगतः ।
त्रिभङ्ग्याख्यः प्रबन्धः स्यादित्येको भेद ईरितः ॥ १८८ ॥
त्रिभङ्ग्याख्येन गुरुणा छन्दसाप्त्रोदितेन यः ।
बध्यते स त्रिभङ्गिः स्यादिति भेदो द्वितीयकः ॥ १८९ ॥

तदप्युत्कलिका चैव चूर्णिका ललितं तथा ।
वृत्तगन्धि च खण्डं च चित्रं चेत्यपि षड्विधम् ॥ २१४ ॥

एतेषां रसभेदाश्च वर्णाश्चाप्यधिदेवताः ।
नियता वृत्तिभेदाश्च गतिभेदा द्रुतादयः ॥ २१५ ॥

द्वैविध्यमभ्युपेतस्य वेणीमिश्रत्वभेदतः ।
सर्वं रत्नाकरे प्रोक्तं तत्रत्यमवगम्यताम् ॥ २१६ ॥

फलतो न विशेषोऽस्तीत्यस्माभिस्तदुपेक्षितम् ।
अथ गद्यस्य रचनाप्रकारः प्रतिपाद्यते ॥ २१७ ॥

प्रणवाद्यमतालं च गमकै रचितैर्युतम् ।
युक्तं स्थाय्यादिवर्णैश्च गायेत्पदकदम्बकम् ॥ २१८ ॥

ततः प्रवन्धनामाङ्कं बद्धमैच्छिकतालतः ।
अवान्तरानेकपदसमुदायात्मकं तथा ॥ २१९ ॥

पदद्वयं निबध्नीयाद् द्विर्गेयं तत्पृथक्त्वतः ।
विलम्बितलयोपेतं प्रयोगं परिकल्पयेत् ॥ २२० ॥

ततो वाग्गेयकारस्य गायकस्य च नामनी ।
सताले विनिबध्नीयाद्विलम्बितलयान्विते ॥ २२१ ॥

पुनश्च द्रुतमानेन प्रबन्धः सकलोऽपि च ।
पूर्वोक्तेन क्रमेणैव गातव्यस्तदनन्तरम् ॥ २२२ ॥

पूर्वोर्जितपदद्वन्द्वे प्रथमस्य पदस्य तु ।
आदिमारभ्य तत्तालं विलम्बितलयान्वितम् ॥ २२३ ॥

एकवारं प्रयुज्याथ न्यासं कुर्यादिति स्थितिः ।
अत्राद्यभाग उद्ग्राहो ज्ञेयो यस्तालवर्जितः ॥ २२४ ॥

यस्तु तालेन सहितः पदद्वन्द्वात्मकः पृथक् ।
द्विर्गातव्यो द्वितीयः स भागस्तु ध्रुव उच्यते ॥ २२५ ॥

वदने त्रितयेऽप्यन्यैः पदैराभोगकल्पनम् ।
षण्मात्रकः स्याच्छगणः पगणः पञ्चमात्रकः ॥ २०२ ॥
चतुर्मात्रस्तु चगणस्त्रिमात्रस्तगणः स्मृतः ।
दगणस्तु द्विमात्रः स्यादित्येतद्गणलक्षणम् ॥ २०३ ॥
त्रिधातुकः प्रबन्धोऽयमनिर्युक्तस्तथैव च ।
हीनो विरुदतेनाभ्यां चतुरङ्गसमन्वितः ॥ २०४ ॥
दीपनीजातिमानेष भवतीत्यवधार्यताम् ।
तदेवं दीपनीजातिप्रबन्धाः पञ्च लक्षिताः ॥ २०५ ॥
अथ द्व्यष्टप्रबन्धेषु भावनीजातिभागिषु ।
वर्णः प्रथममुद्दिष्टो वर्ण्यते तस्य लक्षणम् ॥ २०६ ॥
विरुदैर्विनिबध्येते यत्रोद्ग्राहध्रुवौ पुनः ।
आभोगश्च पदैर्यत्र यश्च कर्णाटभाषया ॥ २०७ ॥
वर्णतालेन चोपेतः स वर्ण इति कथ्यते ।
त्रिविधः स च वर्णाख्यतालत्रैविध्यतः स्मृतः ॥ २०८ ॥
वर्णतालस्त्र्यश्रमिश्रचतुरश्रतया त्रिधा ।
त्र्यश्रवर्णे लघुश्चैव द्रुतद्वन्द्वं लघुत्रयम् ॥ २०९ ॥
चतुष्काणि विरामान्तद्रुतानां त्रीण्यथ स्मृतः ।
गुरुर्द्रुतद्वयं मिश्रे पुनर्गुरुर्लघुः गुरुः ॥ २१० ॥
गुरुर्लघुर्द्रुतश्चैव गुरुश्च चतुरश्रके ।
त्रिधातुकः प्रबन्धोऽयं नियमात्तालभाषयोः ॥ २११ ॥
निर्युक्तस्तालविरुदपदैरङ्गैस्त्रिभिः पुनः ।
पञ्चाङ्गेन परिमितो भावनीजातिमानिति ॥ २१२ ॥
अथ गद्यप्रबन्धस्य कथ्यते लक्षणं स्फुटम् ।
गद्यं नाम स्मृतं छन्दोहीनं पदकदम्बकम् ॥ २१३ ॥

तदप्युत्कलिका चैव चूर्णिका ललितं तथा ।
वृत्तगन्धि च खण्डं च चित्रं चेत्यपि षड्विधम् ॥ २१४ ॥
एतेषां रसभेदाश्च वर्णाश्चाप्यधिदेवताः ।
नियता वृत्तिभेदाश्च गतिभेदा द्रुतादयः ॥ २१५ ॥
द्वैविध्यमभ्युपेतस्य चेर्णामिश्रत्वभेदतः ।
सर्वं रत्नाकरे प्रोक्तं तत्रत्यमवगम्यताम् ॥ २१६ ॥
फलतो न विशेषोऽस्तीत्यस्माभिस्तदुपेक्षितम् ।
अथ गद्यस्य रचनाप्रकारः प्रतिपाद्यते ॥ २१७ ॥
प्रणवाद्यमतालं च गमकै रचितैर्युतम् ।
युक्तं स्थाय्यादिवर्णैश्च गायेत्पदकदम्बकम् ॥ २१८ ॥
ततः प्रबन्धनामाङ्कं यद्वमैच्छिकतालतः ।
अवान्तरानेकपदसमुदायात्मकं तथा ॥ २१९ ॥
पदद्वयं निबध्नीयाद् द्विर्गेयं तत्पृथक्त्वतः ।
विलम्बितलयोपेतं प्रयोगं परिकल्पयेत् ॥ २२० ॥
ततो वाग्गेयकारस्य गायकस्य च नामनी ।
सताले विनिबध्नीयाद्विलम्बितलयान्विते ॥ २२१ ॥
पुनश्च द्रुतमानेन प्रबन्धः सकलोऽपि च ।
पूर्वोक्तेन क्रमेणैव गातव्यस्तदनन्तरम् ॥ २२२ ॥
पूर्वार्जितपदद्वन्द्वे प्रथमस्य पदस्य तु ।
आदिमारभ्य तत्तालं विलम्बितलयान्वितम् ॥ २२३ ॥
एकवारं प्रयुज्याथ न्यासं कुर्यादिति स्थितिः ।
अत्राद्यभाग उद्ग्राहो ज्ञेयो यस्तालवर्जितः ॥ २२४ ॥
यस्तु तालेन सहितः पदद्वन्द्वात्मकः पृथक् ।
द्विर्गातव्यो द्वितीयः स भागस्तु ध्रुव उच्यते ॥ २२५ ॥

त्रिधातुकः प्रबन्धोऽयं छन्दोनियमकीर्तनात् ।
निर्युक्तः पाटविरुदपदैरङ्गैस्त्रिभिर्युतः ॥ २३६ ॥
भावनीजातिमांश्चापि भवतीत्यवधार्यताम् ।
एकोनत्रिंशदाख्याताः कंदभेदास्तु शार्ङ्गिणा ॥ २३७ ॥
निरूप्यतेऽथ कैवाड प्रबन्धस्येह लक्षणम् ।
यत्रोद्ग्राहो ध्रुवश्चैव पाटैरेव निबध्यते ॥ २३८ ॥
आभोगस्तु पदैर्यस्मिन्नुद्ग्राहे च समापनम् ।
स कैवाड इति प्रोक्तः करपाटप्रधानकः ॥ २३९ ॥
प्रबन्धः करपाटाख्यस्तदपभ्रंशनामतः ।
कैवाड इति लोकेऽस्मिन्सर्वत्र व्यवहारभाक् ॥ १४० ॥
सार्थकैरर्थहीनैश्च पाटैः स द्विविधो मतः ।
स शुद्धैर्मिश्रितैः पाटैः शुद्धो मिश्र इति द्विधा ॥ २४१
शुद्धत्वं नाम पाटानां मुखवाद्याक्षरैः सह ।
अयुक्तत्वं मिश्रता तु तैर्युक्तत्वमितीर्यते ॥ २४२ ॥
त्रिधातुरप्यनिर्युक्तः पाटतालपदैस्त्रिभिः ।
अङ्गैरुपनिबद्धत्वाद्भावनीजातिमांस्तथा ॥ २४३ ॥
अथाङ्कचारिणी नाम प्रबन्धः प्रतिपाद्यते ।
यत्रोद्ग्राहध्रुवौ वीररौद्राख्यरससंयुतैः ॥ २४४ ॥
विरुदैर्विनिबध्येते तालेनैकेन केनचित् ।
गायनेलप्रबन्धाख्याविख्यापनमनोहरैः ॥ २४५ ॥
आभोगश्च पदैर्यस्यां कथिता साऽङ्कचारिणी ।
त्रिधातुकः प्रबन्धोऽयमनिर्युक्तश्च कीर्तितः ॥ २४६ ॥
अङ्गैस्त्रिभिश्च विरुदपदतालैर्निबन्धनात् ।
भावनीजातिमांश्चापि भवेद्गणाकरे पुनः २४७ ॥

भेदाः षडङ्घ्रचारिण्या वासवाद्या निरूपिताः ।
ते तत्रैवावगन्तव्या इति सर्वं समञ्जसम् ॥ २४८ ॥

निरूप्यतेऽथ वर्तन्याः प्रबन्धस्येह लक्षणम् ।
स्वराद्यकरणस्य प्राक्प्रबन्धस्य यदीरितम् ॥ २४९ ॥

लक्ष्मोद्ग्राहे ध्रुवे चैव निबिडस्वरबद्धता ।
आभोगे पदबद्धत्वं भवेदिति तथैव च ॥ २५० ॥

वर्तन्यामपि विज्ञेयं विशेषस्तु प्रदर्श्यते ।
स्वराद्यकरणे प्रोक्तो रासस्तालो द्रुतोलयः ॥ २५१ ॥

वर्तन्यां तु न रासः स्याच्चालः किं चैच्छिको भवेत् ।
विलम्बितलयश्चाथ गाने रीतिः प्रदर्श्यते ॥ २५२ ॥

उद्ग्राहं तु द्विरुद्गायेद् ध्रुवाभोगौ सकृत्पुनः ।
ध्रुवे न्यासस्ततो यस्यां वर्तनी सा प्रकीर्तिता ॥ २५३ ॥

त्रिधातुकः प्रबन्धोऽयमनिर्युक्तस्तथैव च ।
पदतालस्वरैर्योगात्त्यङ्गोऽयं भावनीयुतः ॥ २५४ ॥

अथ लक्षणमार्यायाः प्रबन्धस्य निरूप्यते ।
आर्यावृत्तेन रचितामार्यामार्याः प्रचक्षते ॥ २५५ ॥

आर्यावृत्तस्य चार्धान्ते चरणान्तेऽथ या स्वराः ।
प्रयोज्यास्तत्र चाद्यार्धमुद्ग्राहं परिकल्पयेत् ॥ २५६ ॥

तद्वद् द्विवारं गातव्यं द्वितीयार्धं भवेद् ध्रुवः ।
तत्तु गेयं सकृत्पश्चादाभोगं परिकल्पयेत् ॥ २५७ ॥

गानेनैवप्रबन्धाद्युद्ग्राहं च समापयेत् ।
इत्यमार्याप्रबन्धस्य लक्षणं परिपठ्यते ॥ २५८ ॥

वृत्तरत्नाकरे प्रोक्तमार्यावृत्तस्य लक्षणम् ।

" लक्ष्मैतत्सप्त गणा
गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं नलघू वा
प्रथमेऽर्धे नियतमार्यायाः ॥
षष्ठे द्वितीयलात् न्ले
परके मुखलाच्च स यतिपदनियमः ।
चरमेऽर्धे पञ्चमके
तस्मादिह भवति षष्ठो लः ॥ "

उदाहरणमप्येतदार्यावृत्तस्य संमतम् ॥ २५९ ॥
अस्यायमर्थ आर्यायाः प्रथमार्धे प्रकीर्तिताः ।
गणाः सप्त गुरुश्चैव विषमे जगणो न च ॥ २६० ॥
षष्ठोऽयं जगणः प्रोक्तस्तत्स्थाने नलघू च वा ।
नगणश्च लघुश्चेति जातं लघुचतुष्टयम् ॥ २६१ ॥
इत्यार्याप्रथमार्धस्य लक्षणं विशदीकृतम् ।
तदुत्तरार्धेऽपि गणाः सप्तैव च गुरुस्तथा ॥ २६२ ॥
किं तु षष्ठो गणस्तस्मिन्नेक एव लघुर्भवेत् ।
आर्यावृत्ते चतुर्मात्रा गणा ग्राह्या इति स्थितिः ॥ २६३ ॥
आर्याभिदास्तु लक्ष्म्याद्याः षड्विंशतिरुदाहृताः ।
रत्नाकरे न ते लक्ष्ये प्रसिद्धा इत्युपेक्षिताः ॥ २६४ ॥
त्रिधातुकः प्रबन्धोऽयं छन्दोनियमबन्धनात् ।
निर्युक्तस्त्रिभिरङ्गैश्च पदतालान्यगन्मकैः ॥ २६५ ॥
पदन्यादयगन्तव्यो मार्गनाज्ञानिमानिति ।
अथ गाथाप्रबन्धस्य स्वरूपमभिधीयते ॥ २६६ ॥

आर्यालक्षणमेवेदं गाथाया अपि लक्षणम् ।
किं त्वार्या संस्कृतपदैर्बद्धव्येति व्यवस्थितिः ॥ २६७ ॥

गाथा तु प्राकृतपदैर्बद्धव्येत्यनयोर्भिदा ।
निर्युक्तत्वत्रिधातुत्वभावनीजातिशालिताः ॥ २६८ ॥

गाथायामिह विज्ञेयास्त्वार्यालक्ष्मातिदेशतः ।
अथ क्रौञ्चपदो नाम प्रबन्धः प्रतिपाद्यते ॥ २६९ ॥

यत्रोद्ग्राहः स्वरैर्बद्धः पदैस्तु ध्रुव इष्यते ।
पदान्तरैस्तथाऽऽभोगो गातृनामादिचिह्नितः ॥ २७० ॥

प्रतितालाख्यतालेन वक्ष्यमाणेन यो युतः ।
यश्चोद्ग्राहधृतन्यासः स तु क्रौञ्चपदः स्मृतः ॥ २७१ ॥

लघुद्रुतद्वयं चैव प्रतिताले प्रचक्षते ।
स च द्वेधा क्रौञ्चपदनामवृत्तसमन्वितः ॥ २७२ ॥

तद्वृत्तरहितश्चेति तत्र क्रौञ्चपदाभिधम् ।
वृत्तं कीदृशमित्युक्ते तल्लक्षणमुदीर्यते ॥ २७३ ॥

आदौ तु भगणः प्रोक्तो मगणस्तदनन्तरम् ।
सगणो भगणश्चैव चत्वारो नगणास्तथा ॥ २७४ ॥

गुरुश्च यत्र दृश्यन्ते चरणेषु चतुर्ष्वपि ।
वृत्तं क्रौञ्चपदं तत्स्यादस्योदाहरणं पुनः ॥ २७५ ॥

"या कपिलाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना
दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरतिशयकुटिलगतिः ।
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिचितहृदया
सा परिहार्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधि दुःखमिल-
षणा ॥"

निबद्धत्वेन विज्ञेयो भावनीजातिमांस्तथा ।
लक्षणं तोटकस्याथ कथ्यते यः प्रबध्यते ॥ २८६ ॥

तोटकाख्येन वृत्तेन स तोटक इति स्मृतः ।
लक्ष्म तोटकवृत्तस्य वृत्तरत्नाकरे स्फुटम् ॥ २८७ ॥

"इह तोटकमम्बुधिसैः कथितम्"

अस्यायमर्थः सगणैश्चतुर्भिस्तोटकं स्मृतम् ।
इदमेवास्य लक्ष्यं च ज्ञेयमत्र च तोटकम् ॥ २८८ ॥

प्रयोज्याः प्रतिपादान्तं स्वराः पूर्ववदत्र च ।
उद्ग्राहः प्रथमार्धं स्यादुत्तरार्धं ध्रुवः स्मृतः ॥ २८९ ॥

आभोगः पूर्ववत्कार्यस्तेनायं स्यात्त्रिधातुकः ।
निर्युक्तो वृत्तनियमात्स्वरतालपदैस्त्रिभिः ॥ २९० ॥

अङ्गैरपनिबद्धत्वाद्भावनीजातिमांस्तथा ।
हंसलीलप्रबन्धस्य लक्षणं प्रतिपाद्यते ॥ २९१ ॥

पदैर्यत्राद्यपादः स्यात्पाटैश्च द्वितीयकः ।
हंसलीलाख्यतालेन युक्तोऽयं हंसलीलकः ॥ २९२ ॥

हंसलीलाख्यताले च यगणश्च लघुर्गुरुः ।
अत्राद्यपाद उद्ग्राहो द्वितीयस्तु ध्रुवः स्मृतः ॥ २९३ ॥

पदान्तरैस्तथाऽऽभोगस्तेनायं स्यात्त्रिधातुकः ।
निर्युक्तस्तालनियमात्पाटतालपदात्मकैः ॥ २९४ ॥

त्रिभिरङ्गैर्निबद्धत्वाद्भावनीजातिमानपि ।
चतुष्पदीप्रबन्धोऽथ लक्ष्यते लक्ष्यसंमतः ॥ २९५ ॥

यस्या द्वितीयके पादे तुर्यपादे पृथक्पृथक् ।
भवन्ति द्रुपदगत्याद्या मात्रा लघुगुरुात्मिकाः ॥ २९६ ॥

प्रथमे च तृतीयेऽङ्घ्रौ मात्राः पञ्चदशैव च ।
मिश्रार्धयमकोपेतं यस्यामर्धद्वयं भवेत् ॥ २९७ ॥
आद्यमर्धं स्वरान्तं स्यात्तेनान्तं स्याद् द्वितीयकम् ।
तेनकन्याससंयुक्ता गेया कर्णाटभाषया ॥ २९८ ॥
तालेन रहिता सेयं चतुष्पद्यभिधीयते ।
अर्थे सत्यर्थभिन्नानां वर्णानां या पुनःश्रुतिः ॥ २९९ ॥
यमकं तद्भवेदित्थं यमकज्ञाः प्रचक्षते ।
अत्र स्वरान्तमाद्यार्धमुद्ग्राहं परिकल्पयेत् ॥ ३०० ॥
तेनकान्तं द्वितीयार्धं ध्रुवत्वेन प्रकल्पयेत् ।
आभोगः पूर्ववत्कार्यस्तेनायं स्यात्त्रिधातुकः ॥ ३०१ ॥
मात्रानियमयुक्तत्वान्नियुक्तश्च प्रकीर्तितः ।
पदतेनस्वरैरस्त्र्यङ्गो द्वित्वाद्भावनीयुतः ॥ ३०२ ॥
निरूप्यतेऽथ वीरश्रीप्रबन्धस्येह लक्षणम् ।
यत्रोद्ग्राहः पदैर्बद्धो विरुदैस्तु ध्रुवो भवेत् ॥ ३०३ ॥
पदान्तरैस्तथाऽऽभोगो वीरश्रीरिति स स्मृतः ।
त्रिधातुकः प्रबन्धोऽयमनिर्युक्तश्च कीर्तितः ॥ ३०४ ॥
तालाद्यनियमात्तालपदाभ्यां विरुदेन च ।
यत्रोऽयमङ्गत्रययुग्भावनीजातिमांस्तथा ॥ ३०५ ॥
उच्यते मङ्गलाचारप्रबन्धस्याथ लक्षणम् ।
यः कैशिकयाख्यरागेण गीतो निःसारुतालिना ॥ ३०६ ॥
तालेन च निबद्धोऽयं मङ्गलाचार उच्यते ।
त्रिविधः स च गद्यात्मा पद्यात्मा चोभयात्मकः ॥
पादान्ते पाऽथ पाऽर्धान्ते यतोऽन्यास्तत्र च स्वराः
रागस्तु कैशिकी नाम भाषारागः प्रकीर्तितः ॥ ३[illegible]

तदेवं वर्णिता ह्यष्टप्रबन्धा भावनीयुताः ।
अथ द्वाविंशतिस्तारावलीजातिसमन्विताः ॥ ३१७ ॥
प्रबन्धाः पूर्वमुद्दिष्टास्तत्राप्यादौ प्रकीर्तितः ।
एलाप्रबन्धस्तस्येह लक्ष्म सम्यक्प्रचक्ष्महे ॥ ३१८ ॥
एलायास्तावदुद्ग्राहे त्रयः पादाः प्रकीर्तिताः ।
तत्राद्यपादे प्रथमं द्वे खण्डे परिकल्पयेत् ॥ ३१९ ॥
तयोश्च खण्डयोर्धातुरेको मातुस्तु भिद्यते ।
धातुर्नाम स्वरः प्रोक्तो मातुरक्षरमुच्यते ॥ ३२० ॥
एतच्च खण्डयुगलं सानुप्रासं प्रकल्पयेत् ।
वर्णसाम्यमनुप्रास इत्यनुप्रासलक्षणम् ॥ ३२१ ॥
ततः परं प्रयोगस्तु गमकालप्तिलक्षणः ।
किंचित्पदान्वितश्चान्ते कर्तव्यस्तदनन्तरम् ॥ ३२२ ॥
पट्टयाख्यानि गेयानि पदानि त्रीणि तत्र च ।
आद्ये विलम्बमानेन तृतीये द्रुतमानतः ॥ ३२३ ॥

अत्र खण्डद्वयं तारप्रथमं पदमुच्यते ।
ततः परं प्रयोगो यस्तद् द्वितीयं पदं स्मृतम् ॥ ३२४ ॥
तृतीयं च चतुर्थं च पञ्चमं च यथाक्रमम् ।
पदानि पट्टयाख्यानि भवन्ति त्रीण्यतः पुनः ॥ ३२५ ॥
पदानि पञ्च जातानि तदेतत्पदपञ्चकम् ।
उद्ग्राहे प्रथमः पादो भवतीत्यवधार्यताम् ॥ ३२६ ॥
एतत्प्रथमपादोक्तलक्षणेनैव कल्पयेत् ।
द्वितीयमपि मेलापे पादं पञ्चपदात्मकम् ॥ ३२७ ॥
आद्यद्वितीयपदयोरन्यपादयोरेकधातुता ।
मातुस्तु भिन्न इत्येते मन्द्रपादाः प्रपञ्चिते ॥ ३२८ ॥

एवंलक्षण एव स्यात्तृतीयचरणोऽपि च ।
किं तु तत्र विशेषोऽस्ति कश्चित्तमभिदध्महे ॥ ३२९ ॥
आदौ खण्डद्वयं गीत्वा सानुप्रासैकधातुकम् ।
ततः केवलसंबुद्धिपदैरन्ते समन्वितम् ॥ ३३० ॥
पूर्वपादद्वययुतप्रयोगापेक्षया पुनः ।
भिन्नधातुं प्रकुर्वीत प्रयोगमिति निर्णयः ॥ ३३१ ॥
सोमेश्वरादयस्त्वेके चतुर्धातुत्ववादिनः ।
एतेषु द्वादशपदेष्वेकादशपदात्मकम् ॥ ३३२ ॥
उद्ग्राहमुररीकृत्य पदं द्वादशकं पुनः ।
आहुर्मेलापकं तेन मतभेदोऽत्र विद्यते ॥ ३३३ ॥
एवमुद्ग्राहमेलापौ निबध्य तदनन्तरम् ।
ध्रुवं विरचयेत्सोऽपि त्रिपदात्मा प्रकीर्तितः ॥ ३३४ ॥
तत्राद्यं च द्वितीयं च पदं स्यान्मध्यमानतः ।
निबद्धं धातुनैकेन मातुभेदयुतं तथा ॥ ३३५ ॥
तृतीयं तु पदं पूर्वपदाभ्यां भिन्नधातुकम् ।
स्याद्विलम्बितमानं च त्रिष्वेतेषु पदेष्वपि ॥ ३३६ ॥
यत्र कुत्रापि कर्तव्यं नेतृनामाङ्कनं पुनः ।
एवं ध्रुवे त्रीणि पदान्युद्ग्राहे द्वादशेति च ॥ ३३७ ॥
योगे पञ्चदशाभूवन्पदानीत्यवधार्यताम् ।
गातृप्रबन्धनामाङ्कमाभोगमथ कल्पयेत् ॥ ३३८ ॥
आभोगः सर्व एवैष पदमेकमिति स्थितिः ।
तस्मादेलाप्रबन्धोऽयं जातो षोडशपदात्मकः ॥ ३३९ ॥
एवंविधे पुनर्गीत्वा प्रबन्धं सर्वमप्यथ ।
न्यासं कुर्याद् ध्रुवे तालनियमस्त्वथ कथ्यते ॥ ३४० ॥

मट्ठद्वितीयकङ्कालप्रतितालेषु कश्चन ।
तालं एलाप्रबन्धेऽस्मिन्योजनीयो न चापरः ॥ ३४१ ॥
चतुर्णामपि तालानामेतेषां लक्षणं ब्रुवे ।
स्वरप्रकरणे पूर्वं मट्ठलक्षणमीरितम् ॥ ३४२ ॥
द्वितीयताले कथितं द्रुतद्वन्द्वं लघुद्वयम् ।
उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः ॥ ३४३ ॥
चतुर्द्रुती गलौ पूर्णः खण्डो द्रौ च गुरुद्वयम् ।
समो गुरू द्वौ लघ्वन्तौ विषमो लाद् गुरुद्वयम् ॥ ३४४ ॥
लो द्रुतौ प्रतितालः स्यादित्येवं काललक्षणम् ।
इत्युक्तस्तालनियमः प्रबन्धेऽस्मिन्ग्रहस्त्विह ॥ ३४५ ॥
अतीतो वाऽनागतो वा भवेदिच्छानुसारतः ।
तत्रातीतग्रहो नाम यत्र तालं विना पुरा ॥ ३४६ ॥
सकृद् गीत्वा तु गातव्यं तालं गृह्णाति चेत्पुनः ।
तदाऽतीतग्रहः प्रोक्तोऽनागतग्रह उच्यते ॥ ३४७ ॥
यत्र गीतं विनैवादौ तालमादाय चेत्सकृत् ।
गेयं गायति सोऽयं स्यादनागत इति ग्रहः ॥ ३४८ ॥
एवमेलाप्रबन्धस्य प्रोक्तं सामान्यलक्षणम् ।
अत्र च ध्रुवपदसंख्यानां पद्मानां नामदेवताः ॥ ३४९ ॥
उक्ता रत्नाकरे तत्तु बोध्यं तत्रैव वर्तताम् ।
निरूप्यन्ते दश प्राणाः संप्रत्येलापदस्थिताः ॥ ३५० ॥
समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः ।
अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनावपीति ॥ ३५१ ॥
दश प्राणाः सगुणिता ध्रुवपदेषु स्युः पदेष्वपि ।
कथं ननु दश प्राणाः पदेषु ध्रुवपदेषु स्थिताः ॥ ३५२ ॥

संख्याविरोध इति चेदत्रेदमभिधीयते ।
द्वयोस्त्रयाणामपिच पदानामेक एव चेत् ॥ ३५३ ॥
प्राणः संयोज्यते कुत्र विरोधेनावरोधनम् ।
तथाऽपि प्रथमे पादे प्रयोगात्मकमस्ति यत् ॥ ३५४ ॥
पदं द्वितीयं यदपि द्वितीयाङ्घ्रौ द्वितीयकम् ।
प्रयोगाख्यं पदं प्राणमेकमेव तयोर्द्वयोः ॥ ३५५ ॥
योजयेदेकधातुत्वात्समानं नाम नामतः ।
तथा प्रथमपादस्थं यत्पल्लवपदत्रयम् ॥ ३५६ ॥
यच्च द्वितीयपादस्थं पल्लवाख्यं पदत्रयम् ।
षण्णामप्येकधातुत्वात्क्रमेणैव द्वयोर्द्वयोः ॥ ३५७ ॥
मधुराख्यं सान्द्रसंज्ञं कान्ताख्यं चैव योजयेत् ।
तथा पादत्रयस्थानां द्विखण्डात्मत्वमेयुषाम् ॥ ३५८ ॥
पदानामेकधातुत्वात्त्रयाणामपि तेष्वतः ।
एक एव पुनः प्राणो दीप्तसंज्ञः प्रकीर्तितः ॥ ३५९ ॥
पदेष्वेकादशस्वेवं पञ्च प्राणास्तु योजिताः ।
एतेषु द्वादशाद्येषु पञ्चस्वथ यथाक्रमम् ॥ ३६० ॥
समाहिताग्राम्यमुखान्प्राणान्पञ्चापि योजयेत् ।
एवमेलाप्रबन्धस्य द्व्यष्टसंख्यपदेष्वपि ॥ ३६१ ॥
प्राणा दश वसन्तीति कल्लिनाथेन दर्शितम् ।
कथं लक्षणमेतेषां प्राणानामभिधीयते ॥ ३६२ ॥
अल्पाक्षरोऽल्पस्वरश्च समान इति कथ्यते ।
अयं प्राणो भवत्याद्यद्वितीयाङ्घ्रिगयोर्द्वयोः ॥ ३६३ ॥
प्रयोगात्मकयोर्योज्यः पदयोरत एव हि ।
अल्पाक्षरत्वमेतस्य प्रयोगाश्रयणाद्भवेत् ॥ ३६४ ॥

प्राणोऽयं कान्तनामाऽऽद्यद्वितीयचरणस्थयोः ।
अन्त्ययोः पंक्तिव्याख्यानपदयोर्विनियुज्यते ॥ ३७७ ॥

दीप्तनादो भवेद्दीप्तनामा प्राणस्तु पञ्चमः ।
स्वरस्य दीप्तता नाम परिपूर्तिरिति स्मृता ॥ ३७८ ॥

अयमङ्घ्रित्रयेष्वेषु द्विखण्डात्मसु च त्रिषु ।
पदेषु योजनीयः स्यादित्याहुर्गीतकोविदाः ॥ ३७९ ॥

समाहिताख्यो यः प्राणः षष्ठस्तस्य तु लक्षणम् ।
स्थायिवर्णनिविष्टत्वमस्य तात्पर्यमुच्यते ॥ ३८० ॥

तृतीयस्य तु पादस्य प्रयोगात्मकमस्ति यत् ।
पदमाद्यद्वितीयाङ्घ्रिप्रयोगाभ्यां विलक्षणम् ॥ ३८१ ॥

तत्रोचितस्वरांस्तारस्थायित्वेन प्रकल्प्य च ।
कृतायां गमकालप्तौ स्थायिस्थः स्यात्समाहितः ॥ ३८२ ॥

अथाग्राम्याभिधः प्राणः सप्तमस्तस्य लक्षणम् ।
अक्षराणां स्वराणामप्यावृत्त्याऽग्राम्य उच्यते ॥ ३८३ ॥

स्वराक्षराणामावृत्तिश्चक्रवालवदुच्यते ।
प्राणोऽयं ध्रुवखण्डस्य प्रथमे योज्यतां पदे ॥ ३८४ ॥

प्रसन्नो नाम नवमः प्राणस्तस्य तु लक्षणम् ।
यत्र तावत्पदानां स्याज्झटित्यर्थप्रबोधनम् ॥ ३८५ ॥

विविक्तरूपता मन्द्रस्थानादीनां स्वरावलेः ।
प्रसन्नो नवमः प्राणः कथितो भरतादिभिः ॥ ३८६ ॥

ओजस्वी नाम दशमः प्राणस्तस्य तु लक्षणम् ।
यस्मिन्समासभूयस्त्वं स ओजस्वीति कथ्यते ॥ ३८७ ॥

कर्तव्यं तच्च भूयस्त्वं तानेषु च पदेषु च ।
अयमाभोगरूपेऽन्त्ये विनियोज्यः पदे स्मृतः ॥ ३८८ ॥

एवमेलाप्रबन्धस्य द्व्यष्टसंख्यपदेष्वपि ।
निरूपिता दश प्राणा योजनीया इति स्थितिः ॥ ३८९ ॥
नो चेत्प्रबन्धपुरुषो निष्प्राणः किमु शोभते ।
तस्माद्वाग्गेयकारेण यथा प्राणा दशाप्यमी ॥ ३९० ॥
पलापदनिविष्टाः स्युस्तथा यत्नो विधीयताम् ।
तादृगेव भवत्येला कर्तुर्नेतुश्च सौख्यदा ॥ ३९१ ॥
नो चेदनिष्टदेत्युक्तं मतङ्गेन महात्मना ।
एलैवं लक्षिता सेयं चतुर्धा परिकीर्तिता ॥ ३९२ ॥
गणैलाऽऽद्याऽथ मात्रैला वर्णैलाऽथ ततः परम् ।
देशैला चेति तत्रादौ गणैलायास्तु लक्षणम् ॥ ३९३ ॥
यत्तु गणा निरूप्यन्ते समूहो गण उच्यते ।
स च द्वेधा वर्णगणो मात्रागण इति क्रमात् ॥ ३९४ ॥
वर्णोऽपि द्विविधः प्रोक्तो गुरुर्लघुरिति क्रमात् ।
तत्रानुस्वारसंयुक्तो विसर्गेण समन्वितः ॥ ३९५ ॥
व्यञ्जनान्तस्तथा दीर्घो युक्ताक्षरपरस्तथा ।
वर्णो यः स गुरुर्ज्ञेयस्तदन्यो लघुरुच्यते ॥ ३९६ ॥
सानुस्वारो यथा कं गं चं छमित्यादिको गुरुः ।
सविसर्गो यथा कः गः इत्यादिर्गुरुरुच्यते ॥ ३९७ ॥
व्यञ्जनान्तस्तदित्यत्र तवर्णो गुरुरुच्यते ।
दीर्घः काखादिको वर्णो युक्ताक्षरपरो यथा ॥ ३९८ ॥
गर्वेत्यत्र स इत्येव वर्णो गुरुरिति स्मृतः ।
पादान्तस्थो लघुर्वर्णो विकल्पेन गुरुर्भवेत् ॥ ३९९ ॥
गुरुर्द्विमात्रको ज्ञेयो लघुः स्यादेकमात्रकः ।
ऋजुर्येन लघुर्लेख्यो वक्रेण गुरुर्लिपौ ॥ ४०० ॥

जिह्वामूलीययोगे वाऽप्युपध्मानीयसंगतौ ।
रहयोगे लघुर्वर्णो विकल्पेन गुरुर्भवेत् ॥ ४०१ ॥
तेन युक्तपरत्वोत्थगुरुत्वस्यापवादनम् ।
यथा—"तरुणं सर्षपशाकं
नवोदनं पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दरि
ग्राम्यजनो मृष्टमश्नाति ॥"
अत्र तावत्सुन्दरीति पदे रीत्येतदक्षरम् ॥ ४०२ ॥
युक्ताक्षरपरत्वेऽपि लघ्वेव भवति ध्रुवम् ।
ए ओ इं हिं तु चत्वारो दीर्घत्वेऽपि विकल्पतः ॥ ४०३ ॥
लघवः स्युः पदान्तस्थाः प्राकृतादिष्विति स्थितिः ।
पदमध्येऽप्यपभ्रंशे हं हे ए ओ इमित्यमी ॥ ४०४ ॥
पञ्च वर्णा विकल्पेन लघवः स्युरिति स्थितिः ।
सानुस्वारत्वसंप्राप्तं गुरुत्वमिह बाध्यते ॥ ४०५ ॥
एवं निरूपिता वर्णास्तादृग्वर्णत्रयं पुनः ।
उक्तो वर्णगणः सोऽपि भवत्यष्टविधो यथा ॥ ४०६ ॥
मगणो यगणश्चैव रगणः सगणस्तथा ।
तगणो जगणश्चाथ भगणो नगणस्ततः ॥ ४०७ ॥
एवमष्टौ गणास्तत्र मगणस्त्रिगुरुर्यथा ।
कामाक्षीत्यादि यगणस्वरूपमथ कथ्यते ॥ ४०८ ॥
आदौ लघुर्गुरुद्वन्द्वमन्ते चेद्यगणो भवेत् ।
भवानीत्यत्र दृष्टान्तो रगणोऽथ निरूप्यते ॥ ४०९ ॥
आद्यन्तयोर्गुरुर्मध्ये लघुश्चेद्रगणो यथा ।
अम्बिकेत्यादि सगणस्वरूपमथ कथ्यते ॥ ४१० ॥

आदौ लघुद्वयं पश्चाद् गुरुश्चेत्सगणो यथा ।
गिरिजा नगजेत्यादि तगणोऽथ निरूप्यते ॥ ४११ ॥

आदौ गुरुद्वयं पश्चाल्लघुश्चेत्तगणो यथा ।
गौरीशेत्यादि जगणस्वरूपमथ कथ्यते ॥ ४१२ ॥

आद्यन्तयोर्लघुर्मध्ये गुरुश्चेज्जगणो यथा ।
महेशेत्यादि तदनु भगणः प्रतिपाद्यते ॥ ४१३ ॥

गुरुरादौ लघुद्वन्द्वमन्ते चेद्भगणो यथा ।
शंकरेत्यादि नगणः स्मृतः सर्वलघुर्यथा ॥ ४१४ ॥

गिरिशेत्येवमष्टौ च गणाः सम्यङ् निरूपिताः ।
अथैषां देवता भूमिजलाग्निमरुतोऽम्बरम् ॥ ४१५ ॥

सूर्यचन्द्रौ तथा स्वर्गः क्रमादेषां फलानि तु ।
श्रीवृद्धिनिधनस्थानभ्रंशनिर्धनतायशः ॥ ४१६ ॥

कीर्तिमायुश्च शंसन्ति च्छन्दःशास्त्रविशारदाः ।
तस्मात्स्वस्य च वर्ण्यस्य राजादेश्च सुखार्थिना ॥ ४१७ ॥

नित्यं वाग्गेयकारेण मगणो यगणस्तथा ।
भगणो नगणश्चेति गणाश्चत्वार एव हि ॥ ४१८ ॥

प्रयोक्तव्याः प्रबन्धादौ नान्य इत्यवधार्यताम् ।
दिङ्मात्रमुक्तमत्रान्यद् वृत्तरत्नाकरे स्फुटम् ॥ ४१९ ॥

अकाराद्यष्टवर्णानामुच्यते देवतादिकम् ।
सोमो भौमो बुधो जीवः शुक्रः शौरी रविस्तमः ॥ ४२० ॥

क्रमादकचटानां तपयशानां च देवताः ।
द्व्यष्टस्वरा अकाराद्या अवर्गः परिकीर्तितः ॥ ४२१ ॥

कादिवर्णाः स्फुटाः पञ्च वर्गांस्तु यरौ लवौ ।
वर्णाः शषसहा ज्ञेयाः शवर्ग इति निर्णयः ॥ ४२२ ॥

वर्णानां स्युः फलान्येषामायुः कीर्त्तिरसद्भयः ।
संपत्सुभगता कीर्त्तिमान्द्यं मृत्युश्च शून्यता ॥ ४२३ ॥
प्रयोगे श्लोकगीतादौ स्तुत्यस्योक्तानि सूरिभिः ।
एवं वर्णगणाः प्रोक्ता वक्ष्ये मात्रागणानथ ॥ ४२४ ॥
मात्रा कला लघुर्लश्चेत्येते पर्यायवाचकाः ।
ते च पञ्चविधाः प्रोक्ताश्छगणः पगणस्ततः ॥ ४२५ ॥
चगणस्तगणश्चैव दगणश्चेत्यनुक्रमात् ।
षण्मात्रश्छगणस्तत्र यथा गिरिशतनय ॥ ४२६ ॥
पगणः पञ्चमात्राकः स यथा गजवदन ।
चतुर्मात्रस्तु चगणो यथा पुरहरेत्ययम् ॥ ४२७ ॥
त्रिमात्रस्तगणः प्रोक्तो गिरिशेति निदर्शनम् ।
दगणस्तु द्विमात्रः स्याद्यथा हरशिवादिकः ॥ ४२८ ॥
अथान्येऽपि निरूप्यन्ते गणा मात्रागणाभिधाः ।
अत्युक्ता चैव मध्या च प्रतिष्ठा चेति विश्रुताः ॥ ४२९ ॥
छन्दोविशेषास्तेषां च च्छन्दःशास्त्रोक्तमात्रकाः ।
प्रस्तारे ये गणा जाता वृत्तभेदोपपादकाः ॥ ४३० ॥
मात्रागणा इति प्रोक्तास्ते गणा भरतादिभिः ।
अत्युक्तायास्तु चत्वारो भेदास्तत्र प्रकीर्तिताः ॥ ४३१ ॥
चत्वारश्चापि ते भेदा ज्ञेया रतिगणा इति ।
किं तु तत्र लपूर्वा ये तेष्वाद्याधिको लघुः ॥ ४३२ ॥
एवं मध्याभवा भेदा अष्टौ कामगणाः स्मृताः ।
तद्वत्कामगणा भेदाः प्रतिष्ठायास्तु षोडश ॥ ४३३ ॥
एवं निरूपिता वर्णगणा मात्रागणास्तथा ।
तत्र वर्णगणैर्यद्वा गणैला परिकीर्तिता ॥ ४३४ ॥

सा भवेत्त्रिविधा शुद्धा संकीर्णा विकृता तथा ।
शुद्धा चतुर्विधा नादावती हंसावती तथा ॥ ४३५ ॥
नन्दावती च भद्रावत्येतासां लक्ष्म कथ्यते ;
पञ्चभिर्भगणैरन्ते नगणेन समन्वितैः ॥ ४३६ ॥
मगणाद्यैर्वर्णगणैर्बद्धा नादावती स्मृता ।
गणानां नियमस्त्वाद्यपादे खण्डद्वये परम् ॥ ४३७ ॥
ततः परं त्विच्छयैव प्रयोक्तव्या गणा इह ।
अस्यां टक्काभिधो रागो मट्ठतालश्च कीर्तितः ॥ ४३८ ॥
अथ हंसावती ध्रुवो यस्यां खण्डद्वयं पुनः ।
पञ्चभी रगणैरन्ते सगणेन युतैर्भवेत् ॥ ४३९ ॥
द्वितीयतालहिन्दोलरागाभ्यां सहितोऽप्ययम् ।
हंसावती गणानां च नियमोऽत्रापि पूर्ववत् ॥ ४४० ॥
पदे खण्डद्वये ज्ञेयस्ततो नन्दावतीं ब्रुवे ।
पञ्चभिस्तगणैरन्ते जगणेन समन्वितैः ॥ ४४१ ॥
यस्याः खण्डद्वयं सेयं नन्दावत्यभिधीयते ।
तालोऽत्र प्रतितालाख्यो रागो मालवकैशिकः ॥ ४४२ ॥
गणानां नियमश्चात्र पदे खण्डद्वये परम् ।
अथ भद्रावतीं ध्रुवो यस्यां खण्डद्वयं पुनः ॥ ४४३ ॥
पञ्चभिर्मगणैरन्ते यगणेन युतैर्भवेत् ।
इति भद्रावती तस्यां तालः कङ्कालनामकः ॥ ४४४ ॥
रागस्तु ककुभो नाम गणानां नियमोऽत्र च ।
द्रष्टव्यः पूर्ववच्चतुरस्रगणैला इति वर्णिताः ॥ ४४५ ॥
चतसृष्वपि चैतासु गणैलासु पुरोदितम् ।
एलाप्रबन्धसामान्यलक्षणं योज्यमिष्यते ॥ ४४६ ॥

विशेषमात्रमत्रोक्तं संकीर्णविकृताः पुनः ।
एलास्तु बहुशः सन्ति मतङ्गाद्यागमोदिताः ॥ ४४७ ॥
श्रीमता शार्ङ्गदेवेन संक्षिप्योक्तास्तु ताः पुनः ।
इदानीं नैव लक्ष्ये ताः संलक्ष्यन्तेऽपि कुत्रचित् ॥ ४४८ ॥
इत्यस्माभिर्विसृज्यैता मात्रैला प्रतिपाद्यते ।
मात्रागणैर्वा च्छगणपगणाद्यैर्निबध्यते ॥ ४४९ ॥
सा मात्रैला तु तद्भेदा बहुधा मतभेदतः ।
तत्र विस्तरसंत्रस्तैरस्माभिरिह कथ्यते ॥ ४५० ॥
रतिरेखाभिधानैका मात्रैला पार्वतीमता ।
तस्यां तावत्त्रिपादात्मन्युद्ग्राहे प्रथमाङ्घ्रिगाः ॥ ४५१ ॥
मात्रास्त्वेकादशैव स्युस्तथैवाङ्घ्रौ द्वितीयके ।
एकादशैव मात्राः स्युस्तृतीये तु दश स्मृताः ॥ ४५२ ॥
रतिलेखेति तामाह श्रीमहेश्वरवल्लभा ।
मात्रैलेत्थं निगदिता वर्णैलाऽद्य निरूप्यते ॥ ४५३ ॥
गणानामपि मात्राणां नियमेन विनैव या ।
विभज्यते सा वर्णैला चतुर्विंशतिधा च सा ॥ ४५४ ॥
षडक्षराङ्घ्रिखण्डादेरेकोनत्रिंशदक्षरम् ।
यावदेकैकवृद्धाः स्युश्चतुर्विंशतिरत्र तु ॥ ४५५ ॥
मठद्वितीयकङ्कालप्रतितालेषु कश्चन ।
तालः स्यादिति वर्णैला घणिताऽथ निरूप्यते ॥ ४५६ ॥
देशैला देशभाषाभिर्निबद्धाः परिकीर्तिताः ।
कर्णाटलाटगौडान्ध्रद्रविडानां प्रभेदतः ॥ ४५७ ॥
सा च पञ्चविधा प्रोक्ता तत्र कर्णाटभाषया ।
निबद्धा या भवेदेषा कर्णाटैलेति कथ्यते ॥ ४५८ ॥

लाटभाषानिबद्धा तु लाटैला परिकीर्तिता ।
गौडभाषाविरचिता गौडैला समुदाहृता ॥ ४५९ ॥
आन्ध्रभाषानिबद्धाः स्युरान्ध्रैलाः समुदीरिताः ।
द्राविड्या भाषया बद्धा द्राविडैलेति कथ्यते ॥ ४६० ॥
एलाप्रबन्धसामान्यलक्षणं यदुदाहृतम् ।
तल्लक्षणयुतैवैला बद्धा देशीयभाषया ॥ ४६१ ॥
देशैलापदवाच्यत्वं भजतीत्यवधार्यताम् ।
कर्णाटैलाऽऽदिमध्यान्तवर्णानुप्रासभासुरा ॥ ४६२ ॥
अन्त्यप्रासा तु लाटी स्याद् भूयो रसविराजिता ।
गमकप्रासनिर्मुक्ता गौडी त्वेकरसा मता ॥ ४६३ ॥
नानाप्रयोगरागांशरसभावोत्कटाऽऽन्ध्रिका ।
भूरिभावरसोत्कर्षा द्राविडी प्रासवर्जिता ॥ ४६४ ॥
इत्थमेलाऽत्र संक्षिप्य प्रोक्ता लक्ष्यज्ञसंमता ।
एलानां त्रिशती प्रोक्ता षट्पञ्चाशत्समन्विता ॥ ४६५ ॥
निर्युक्तोऽयं प्रबन्धः स्यात्तालादिनियमो यतः ।
त्रिधातुर्वा चतुर्धातुर्मेलापकविकल्पतः ॥ ४६६ ॥
पदतालाङ्गयुगलबद्धस्ताखावलीयुतः ।
अथोद्देशक्रमप्राप्तढेङ्कीलक्षणमुच्यते ॥ ४६७ ॥
यत्रोद्ग्राहस्य पूर्वार्धे द्विवारं परिगीयते ।
उत्तरार्धे सकृच्चैव प्रयोगात्मा ततः परम् ॥ ४६८ ॥
मेलापकः स तु भवेन्न भवेद्वा विकल्पतः ।
एतावुद्ग्राहमेलापौ तालेन रहितौ स्मृतौ ॥ ४६९ ॥
अथ वा ढेङ्किकातालकङ्कालान्यतरान्वितौ ।
विलम्बितलयौ चैव कर्तव्याविति निर्णयः ॥ ४७० ॥

लयान्तरेऽन्यतालेन ध्रुवाभोगौ ततस्तु तौ ।
ध्रुवस्त्रिखण्डस्तत्राद्ये खण्डे द्वे समधातुके ॥ ४७१ ॥
तृतीयं भिन्नधातु स्याद् द्विर्गेयस्तादृशो ध्रुवः ।
आभोगोऽथ सकृद्गेयः प्रबन्धं सकलं पुनः ॥ ४७२ ॥
गीत्वा भवेद् ध्रुवे न्यासो यस्यां सा ढेङ्किका स्मृता ।
रगणो ढेङ्किका कैश्चिदेषा प्रोक्ता तथा जनैः ॥ ४७३ ॥
ढेङ्कितालस्य लक्ष्मेदं कङ्कालस्य तु लक्षणम् ।
उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः ॥ ४७४ ॥
चतुर्द्रुती गलौ पूर्णः खण्डो दौ च गुरुद्वयम् ।
समो गुरू द्वौ लघ्वन्तौ विषमो लाद् गुरुद्वयम् ॥ ४७५ ॥
चतुर्धा ढेङ्किका मुक्तावली स्याद् वृत्तबन्धिनी ।
युग्मिनी वृत्तमाला च तत्र वृत्तं न विद्यते ॥ ४७६ ॥
यस्यां मुक्तावली सा स्याद् वृत्तं यत्रैकमेव चेत् ।
सा वृत्तबन्धिनी यस्यां द्वे वृत्ते सा तु युग्मिनी ॥ ४७७ ॥
बहूनि यत्र वृत्तानि वृत्तमाला तु सा भवेत् ।
त्रिधा तिस्रो द्वितीयाद्या वर्णिका गणिका तथा ॥ ४७८ ॥
मात्रिका वर्णजैर्वृत्तैर्गणजैर्मात्रिकैरपि ।
दशापि स्युः पुनस्त्रेधा समालंकरणा तथा ॥ ४७९ ॥
विषमालंकृतिश्चिश्रालंकृतिर्लक्षणानि तु ।
समाऽलंकारसंख्या च विषमा मिश्रिता क्रमात् ॥ ४८० ॥
निर्युक्तोऽयं प्रबन्धः स्याच्छन्दस्तालादियन्त्रणात् ।
त्रिधातुर्वा चतुर्धातुर्मेलापकविकल्पतः ।
पदतालाङ्कयुगलबद्धस्तारावलीयुतः ॥ ४८१ ॥

* * * *

एतावानेवाऽयं ग्रन्थ उपलब्धः ।

# अनुबन्धः

अथ रागाङ्गरागाणां नामान्युच्यन्त आदितः ।
[1] कनकाम्बरिरागः स्यात्[2] फेनद्युतिरतः परम् ॥ १ ॥
[3] गानसामवराली च [4] भानुमत्याख्यरागकः ।
[5] मनोरञ्जनिकारागस्[6] तनुकीर्त्तिस्ततः परम् ॥ २ ॥
[7] सेनाग्रणी[8]र्जनतोडिः स्याद् [9] धुनीभिन्नपड्जकः ।
[10] नटाभरणरागश्च [11] कोकिलारव एव च ॥ ३ ॥
[12] रूपावती ततो [13] गेयहेज्जज्जीराग एव च ।
[14] घाटीवसन्तभैरव्या [15] मायामालवगौलकः ॥ ४ ॥
[16] स्यात्तोयवेगवाहिन्या[17] च्छायावती ततः परम् ।
[18] अपशुद्धमालवी स्याज्[19] झंकारभ्रमरीति च ॥ ५ ॥
[20] नारीरीतिगौलरागः [21] किरणावलिरागकः ।
[22] श्रीरागः स्याद् [23] गौरिवेलावली [24] वीरवसन्तकः ॥ ६ ॥
[25] स्याच्छरावतिकारागस्[26] तरङ्गिणी ततः परम् ।
[27] सौरसेनाख्यरागोऽथ [28] हरिकेदारगौलकः ॥ ७ ॥

29 30
शंकराभरणो धीरो नागाभरणमेव च ।
31 32 33
फलावती रागचूडामणिर्गङ्गातरङ्गिणी ॥ ८ ॥
34 35 36
भोगच्छायानाटशैलदेशाक्षी चलनाटकः ।
एते पूर्वाङ्गरागाः स्युरुत्तराङ्गानथो ब्रुवे ॥ ९ ॥
37 38 39
सौगन्धिनी जगन्मोहनाऽथ धालिवरालिका ।
40 41 42
नभोमणिः कुम्भिनी च रविक्रिया तथैव च ॥ १० ॥
43 44 45
गीर्वाणी च भवानी च शैवपन्तुवरालिका ।
46 47 48
स्तवराजोऽथ सौवीरारागो जीवन्तिका तथा ॥ ११ ॥
49 50 51
धवलाङ्गो नामदेशी काशिरामक्रिया तथा ।
52 53
रमामनोहरीरागो गमकक्रियरागकः ॥ १२ ॥
54 55 56 57
वंशावती शामला च चामरा च सुमद्युतिः ।
58 59 60
देशिसिंहरवो धामवती निषधरागकः ॥ १३ ॥
61 62
स्यात्ततः कुन्तलो रागो रतिप्रिया ततः परम् ।
63 64 65
गीतप्रियाभूषावल्यौ शान्तकल्याणिरागकः ॥ १४ ॥
66 67 68
चतुरङ्गिणिसन्तानमञ्जर्यौ ज्योतिरागकः ।
69 70
धौतपञ्चमरागश्च नासामणिस्ततः परम् ॥ १५ ॥

कुसुमाकररागोऽथ रसमञ्जरिरागकः ।
उपाङ्गरागा उच्यन्ते तत्तन्मेलसमुद्भवाः ॥ १६ ॥
गानसामवराल्यास्तु मेले पूर्ववरालिका ।
भिन्नपञ्चमरागश्चेति रागद्वयमीरितम् ॥ १७ ॥
जनतोडीरागमेले रागो नागवरालिका ।
भाषाङ्गरागः पुंनागवरालीराग ईरितः ॥ १८ ॥
धुनिभिन्नपड्जमेले रागो मोहननाटकः ।
भूपालश्चोदयरविचन्द्रिका च प्रकीर्तिताः ॥ १९ ॥
वसन्तभैरवीमेले जातो ललितपञ्चमः ।
मायामालवगौलस्य मेले सालगनाटकः ॥ २० ॥
छायागौलोऽथ माङ्गल्यकैशिकी मेघरञ्जनी ।
गुम्मकाम्भोजिटक्कौ च नादरामक्रिया तथा ॥ २१ ॥
पाडी च रेचगुप्तिः कन्नडबङ्गालगौलकौ ।
ललितो गुर्जरी गुण्डक्रिया मलहरीति च ॥ २२ ॥
बौल्यार्द्रदेशिकारागावथ भाषाङ्गमुच्यते ।
सौराष्ट्रः पौरवी गौलीपन्तुर्मारुवरागकः ॥ २३ ॥
सावेरी चाथ मालवपञ्चमः पूर्णपञ्चमः ।
मार्गदेशी रामकली फर्जुगौरी वसन्तकः ॥ २४ ॥
वेगवाहिनिमेले तु भाषाङ्गं भैरवोऽजनि ।
नारीरीतिगौलमेले जातो हिन्दोलरागकः ॥ २५ ॥
नागगांधारिकाऽऽनन्दभैरवी तदनन्तरम् ।
घण्टारवो मार्गहिन्दोलो हिन्दोलवसन्तकः ॥ २६ ॥

आभेरी चेत्युपाङ्गानि त्वथ भाषाङ्गलक्षणाः ।
भैरव्याहरिधन्याशीगोपिकाद्यवसन्तकाः ॥ २७ ॥

अथ श्रीरागमेले तु मणिरङ्गुस्ततः परम् ।
स्यात्सालगभैरवी च शुद्धधन्याशिरागकः ॥ २८ ॥

रागः कन्नडगौलश्च शुद्धदेशी ततः परम् ।
देवगांधारिकामालवश्रीरेत उपाङ्गकाः ॥ २९ ॥

भाषाङ्गाः श्रीरञ्जनी च कापीरागो हुशानिका ।
बृन्दावनी सैन्धविकाऽथ माधवमनोहरी ॥ ३० ॥

स्यान्मध्यमावती देवमनोहरी ततः परम् ।
नाटकुरञ्जिरागश्चे(?)त्येते भाषाङ्गलक्षणाः ॥ ३१ ॥

हरिकेदारगौलस्य मेले तु वलहंसकः ।
रागोऽथ माहुरी देवक्रियाऽऽन्धाली च रागकाः ॥ ३२ ॥

छायातरङ्गिणीनारायणगौलाख्यरागकौ ।
नटनारायणीरागोऽप्यथ भाषाङ्गमुच्यते ॥ ३३ ॥

भाषाङ्गरागाः काम्भोजी कन्नडेशमनोहरी ।
सुरटश्च येरकुलकाम्भोज्याठाण इत्यपि ॥ ३४ ॥

नीलाम्बरी (?) चेत्येते हि रागा भाषाङ्गलक्षणाः ।
शंकराभरणे मेले जाता रागाः कुरञ्जिका ॥ ३५ ॥

नारायणी चारभी च रागाः शुद्धवसन्तकः ।
स्यान्नारायणदेशाक्षी सामो वै पूर्वगौलकः ॥ ३६ ॥

मारारञ्जनीत्युपाङ्गान्यथ भाषाङ्गलक्षणाः ।
पिलाहुरी येगडश्चाथ रागः पूर्णचन्द्रिका ॥ ३७ ॥

सारम्यतमनोहारी केदारो नवरोजुका ।
दीपकस्तुपरागेश्च सिन्धुरामक्रिया तथा ॥ ३८ ॥

अथ रामक्रियामेले कुमुदक्रियदीपकौ ।
शान्तकल्याणिमेले तु यन्नाकल्याणिमोहने ॥ ३९ ॥
घनरागा नाटगौलौ वराली वौलिरेव च ।
श्रीराग आरभिश्चैव मालवश्रीस्ततः परम् ॥ ४० ॥
रीतिगौलोऽष्ट रागास्ते घनरागाः प्रकीर्तिताः ।
भैरवी केदारगौलः कल्याणी च ततः परम् ॥ ४१ ॥
काम्भोजी तोडिभैरुकुलकाम्भोजीराग एव च ।
पुंनागो वेगडः शंकराभरणस्तथैव च ॥ ४२ ॥
पन्तुवराली बिलहरी चाथ नवरोजुका ।
मध्यमावतिधन्याशी सौराष्ट्रिकाऽपि मोहना ॥ ४३ ॥
शुद्धसावेरिसावेर्यानन्दभैरव आहरी ।
घण्टारवः कन्नडश्च नीलाम्बरी मुखारिका ॥ ४४ ॥
नाटकुरञ्जिसारङ्गौ हुशानी गौलिपन्तुका ।
गुम्मकाम्भोजिभूपालरागौ मङ्गलकैशिकी ॥ ४५ ॥
मलारिर्देवगांधारी नादरामक्रिया तथा ।
असावेरीपूर्विगौरीसैन्धव्यो रक्तिरागकाः ॥ ४६ ॥
सूरटी दरुबारश्च नायकी यमुना च सा ।
पूर्व्या कल्याण्यठाणानी वृन्दावनी जुजावती ॥ ४७ ॥
देवगान्धारिफरजुरामकलयथ शाहना ।
भैरवश्च वसन्तश्च गौरी तोडी धियासु च ॥ ४८ ॥
हम्मीरश्च बलावलुघनासरिमलाह्नकाः ।
ककुभो माञ्जिपूर्वी चेत्येते देशीयरागकाः ॥ ४९ ॥

---

१. कनकाम्बरिरागोऽसावारोहे गनिवर्जितः ।
निवक्रः सर्वकालेषु गीयते गायकोत्तमैः ॥
शुद्धस्वरो मुखारिश्चाप्यारोहे गनिवर्जितः ।
संपूर्णः सग्रहोपेतः सर्वकालेषु गीयते ॥ १ ॥
शुद्धसावेरिकारागः पञ्चमग्रहसंयुतः ।
निगलोपादौडुवोऽयं सायंकाले प्रगीयते ॥ २ ॥
२. रागः फेनद्युतिः सग्रहश्चारोहे गवर्जितः ।
निवक्रः सर्वकालेषु गीयते लक्ष्यकोविदैः ॥
३. संपूर्णा सग्रहा सामवराली सार्वकालिकी ॥
पूर्णा पूर्ववराली स्यादारोहे गनिवर्जिता ।
षड्जग्रहा सर्वकाले गीयते गायकोत्तमैः ॥ १ ॥
मिश्रपञ्चमरागोऽयमारोहे वै धवर्जितः ।
षड्जग्रहः सर्वकाले गीयते गायकोत्तमैः ॥ २ ॥
४. षड्जग्रहा भानुमती संपूर्णा सार्वकालिकी ॥
५. मनोरञ्जनिका पूर्णा सग्रहा सार्वकालिकी ।
अवरोहे गवक्रा स्यादेयं गायन्ति गायकाः ॥
६. अवरोहे धवक्रश्चेत्तनुकीर्त्तिस्तु संमतः ।
षड्जग्रहः सर्वकाले गीयते गायकोत्तमैः ॥
७. सेनाग्रणीरित्यारोहे मधवक्रस्तु रागकः ।
सग्रहः सर्वकालेषु गीयते गायकोत्तमैः ॥
८. तोडिः षड्जग्रहः पूर्णः सायंकाले प्रगीयते ॥
आरोहे चावरोहे च धवक्रा सायंकालिकी ।
षड्जग्रहेति विज्ञेया रागो नागवरालिका ॥ १ ॥

मन्द्रषड्जनिषादोर्ध्वधैवतान्तप्रमाणका ।
स्यात्पुंनागवरालिस्तु सग्रहा सार्वकालिकी ॥ २ ॥
असावेर्याख्यरागश्चाप्यारोहे गनिवर्जितः ।
संपूर्णः सग्रहोपेतः सर्वकालेषु गीयते ॥ ३ ॥

९. भिन्नषड्जाख्यरागोऽयमृषमग्रहसंयुतः ।
संपूर्णः प्रथमे यामे दिनस्य परिगीयते ॥
आरोहे चावरोहे च धवक्रा रिपमच्युतिः ।
गीयते सर्वकालेषु मोहनानाटकाभिधा ॥ १ ॥
भूपालः सग्रहोपेत औडुवो मनिवर्जितः ।
प्रातःकालेषु गातव्यः सर्वसंपत्प्रदायकः ॥ २ ॥
रिधत्यक्तोदयरविचन्द्रिका त्वौडुवी मता ॥ ३ ॥

१०. नटाभरणरागः स्यादारोहे रिपमोज्झितः ।
आरोहे चावरोहे च धवक्रः सार्वकालिकः ॥

११. कोकिलारवः संपूर्ण आरोहे च गवर्जितः ।
सग्रहः सर्वकालेषु गीयते गायकोत्तमैः ॥

१२. आरोहे स्याद्रूपवती गधनीवर्जिता क्रमात् ।
अवरोहे धवक्रा स्याद्रिवर्ज्या सार्यकालिकी ॥

१३. हेज्जज्जिरागः संपूर्ण आरोहे च निवर्जितः ।
मध्यमग्रहसंयुक्तः सायंकाले प्रगीयते ॥

१४. वसन्तभैरवीरागः संपूर्णः स्वल्पपञ्चमः ।
षड्जग्रहसमायुक्तः सायंकाले प्रगीयते ॥
ललितः पञ्चमः पूर्णः षड्जग्रहसमन्वितः ।
आरोहे रिपवर्ज्यः स्यात्सर्वकालेषु गीयते ॥ १ ॥

१५. पूर्णो मालवगौलाख्यः सग्रहो गीयते सदा ॥
सालङ्गनाटः संपूर्ण आरोहे गनिवर्जितः ।
षड्जग्रहान्वितः सायंसंध्याकाले प्रगीयते ॥ १ ॥
छायागौलश्च संपूर्ण आरोहे गनिवर्जितः ।
निषादग्रहसंयुक्तः सायंकाले प्रगीयते ॥ २ ॥
च्युतपञ्चमसंयुक्ता वक्रारोहाऽवरोहणे ।
संपूर्णा सग्रहोपेता सा स्यान्मङ्गलकैशिकी ॥ ३ ॥
औडुवी पधवर्ज्या रिवक्रा स्यादवरोहणे ।
षड्जग्रहेण संयुक्ता गातव्या मेघरञ्जनी ॥ ४ ॥
मेचबौलिस्तु संपूर्णा चारोहे मनिवर्जिता ।
षड्जग्रहसमायुक्ता गेया गायकसत्तमैः ॥ ५ ॥
षाडवष्टक्करागः स त्वारोहे च रिवर्जितः ।
अवरोहे निवर्ज्यः स्यात्सग्रहो गीयते सदा ।
आरोहेऽप्यवरोहे च क्वचित्स्यादल्पपञ्चमः ॥ ६ ॥
नादरामक्रिया पूर्णा सायं गेया हि सग्रहा ॥ ७ ॥
षाडिः षड्जग्रहो वक्रधैवतस्तु गवर्जितः ।
षाडवः पूर्वरात्रे तु गेयो गान्धर्वकोविदैः ॥ ८ ॥
औडुवो रेवगुप्तिस्तु रिग्रहो मनिवर्जितः ।
दिनस्य चरमे यामे गेयो गायकसत्तमैः ॥ ९ ॥
रागः कर्णाटबङ्गालः षाडवो गग्रहान्वितः ।
निवर्ज्यः प्रातरुद्गेय आरोहे गच्युतः क्वचित् ॥ १० ॥
गौडस्तु षाडवो रागो निग्रहो धैवतोज्झितः ।
सदा पश्चिमगांधारः सर्वकालेषु गीयते ॥ ११ ॥

ललिता सग्रहा प्रातर्गेया पञ्चमवर्जिता ॥ १२ ॥
संपूर्णा गुर्जरी प्रातर्गीयते रिग्रहान्विता ॥ १३ ॥
गुण्डक्रियः सग्रहोऽयमवरोहेऽल्पधैवतः ।
संपूर्णः पूर्वयामे तु गातव्यो गायकोत्तमैः ॥ १४ ॥
भवेन्मलहरीरागो निच्युतो धैवतग्रहः ।
षाडवो गीयते प्रातरारोहे तु गवर्जितः ॥ १५ ॥
सग्रहो गौलिरागस्तु औदो मध्यमवर्जितः ।
तुरीययामे गेयः स्यादारोहे तु निवर्जितः ॥ १६ ॥
आर्द्रदेशी भवेत्पूर्णा सग्रहा सार्वकालिकी ॥ १७ ॥
षड्जग्रहा देवरञ्जी चौडुवी रिगवर्जिता ॥ १८ ॥
सौराष्ट्ररागः संपूर्णः सग्रहः सार्वकालिकः ।
पञ्चश्रुतिर्धैवतस्तु क्वचित्स्थाने प्रयुज्यते ॥ १९ ॥
पूर्विरागश्च संपूर्णः सग्रहः सार्वकालिकः ॥ २० ॥
सग्रहो गौलिपन्तुः स चारोहे गधवर्जितः ।
संपूर्णः सर्वकालेषु गीयते गायकोत्तमैः ॥ २१ ॥
रिपञ्चं आरोहे पूर्णो मारवस्तु ससग्रहः ।
गीयते सर्वकालेषु गानतत्त्वविशारदैः ॥ २२ ॥
सावेरिरागः पूर्णोऽयमारोहे गनिवर्जितः ।
गनी त्रिश्रुती लक्ष्ये कचिन्नापन्ति गायकाः ॥ २३ ॥
धवर्जितः स्यादारोहे पूर्णो मालवपञ्चमः ।
षड्जग्रहसमायुक्तः सर्वकालेषु गीयते ॥ २४ ॥
निषज्यैः सग्रहोपेतः षाडवः पूर्णपञ्चमः ॥ २५ ॥
निषादो वर्जितो यत्र मध्यमो वर्जितो मतः ।
षाडवी सग्रहोपेता मार्गदेशीति सा स्मृता ॥ २६ ॥
॥

रागो रामकली ज्ञेया ह्यारोहे मनिवर्जिता ।
षड्जग्रहा तु संपूर्णा प्रातःकालेषु गीयते ॥ २७ ॥
फरजूरागः संपूर्णः सग्रहः सार्वकालिकः ॥ २८ ॥
गौरीरागः सग्रहोऽयं सायंकाले प्रगीयते ।
च्युतपञ्चमसंयोज्यो गीयते गायकोत्तमैः ॥ २९ ॥
वसन्तरागः संपूर्णश्च्युतपञ्चमसंयुतः ।
आरोहे तु गवक्रः स्याद्रिवर्ज्यो गीयते सदा ॥ ३० ॥

१६. गेया षड्जग्रहोपेता संपूर्णा वेगवाहिनी ।
भैरवः सग्रहः पूर्णः प्रातःकाले प्रगीयते ॥ १ ॥

१७. छायावती स्यादारोहे पवर्ज्या सार्वकालिकी ॥

१८. शुद्धमालविरागस्तु संपूर्णो वक्रधैवतः ।

१९. झंकारभ्रमरीराग आरोहे तु निवर्जितः ।
गीयते सर्वकालेषु गानशास्त्रविशारदैः ॥

२०. निग्रहो रीतिगौलाख्य आरोहे तु धवर्जितः ।
संपूर्णश्चैव गातव्यः सायाह्ने गीतकोविदैः ॥
हिन्दोलस्त्वौडुवो रागः पञ्चमर्षभवर्जितः ।
षड्जग्रहेण संयुक्तो गातव्यः सर्वदा बुधैः ॥ १ ॥
संपूर्णा नागगांधारी ह्यारोहे च गवर्जिता ।
षड्जग्रहा सर्वकाले गेया गायकसत्तमैः ॥ २ ॥
आरोहे रिषभं त्यक्त्वा धवक्रं च समाश्रिता ।
संपूर्णा सग्रहोपेता भवेदानन्दभैरवी ॥ ३ ॥
घण्टारवस्तु संपूर्णः सायं गेयश्च धग्रहः ॥ ४ ॥
मार्गहिन्दोलरागः स्यादारोहे च रिवर्जितः ।
अवरोहे निषादवर्ज्यो रिषभो ग्रहरञ्जकः ॥ ५ ॥

स्याद्धिन्दोलवसन्तस्तु रिपमेण हि वर्जितः ।
आरोहणे निवर्ज्यः स्यादवरोहे निवक्रितः ॥ ६ ॥
आभेरी सग्रहा पूर्णा स्यादारोहे निवर्जिता ॥ ७ ॥
नवरत्नविलासस्तु निवर्ज्यः षाडवो मतः ॥ ८ ॥
संपूर्णो भैरवीरागः सायंकाले प्रगीयते ।
पञ्चश्रुतिर्धैवतोऽत्र क्वचित्स्थाने प्रयुज्यते ॥ ९ ॥
आहिरी सा तु संपूर्णा सग्रहा श्रोत्ररञ्जनी ।
गीतोक्तमेलमार्गेण याणयामे प्रगीयते ॥ १० ॥
धन्यासिरागः संपूर्ण आरोहे रिधवर्जितः ।
गानतत्त्वार्थविद्भिः स प्रातःकाले प्रगीयते ॥ ११ ॥
स्याद्दीपिकावसन्ताख्यः पूर्णः षड्जग्रहान्वितः ।
आरोहे तु धवक्रः स्यादवरोहे रिवक्रितः ॥ १२ ॥
माञ्जिरागस्तु संपूर्णः सग्रहो गीयते सदा ॥ १३ ॥
:-मुखार्याख्यः स रागः स्यादारोहे गनिवर्जितः ।
संपूर्णः सग्रहोपेतः सर्वकालेषु गीयते ॥ १४ ॥

२१. किरणावलिरागस्तु संपूर्णः सग्रहान्वितः ।
पधमैः स्वकगांधारमारोहे धावरोहणे ।
धमयोर्वक्रता ज्ञेया सर्वकालेषु गीयते ॥

२२. श्रीरागः सग्रहः पूर्णश्चारोहे चाल्पधैवतः ।
अवरोहे गधमः स्यात्सायं गेयः शुभावहः ॥

मल्लिरस्तु सग्रहान्तः षाडवोऽपि धवर्जितः ।
गवर्जितः स्यादारोहे सर्वकालेषु गीयते ॥ १ ॥

संपूर्णा सग्रहोपेता चारोहे पधवर्जिता ।
दिनस्य चरमे यामे गेया लालगभैरवी ॥ २ ॥

रागो रामकली ज्ञेया ह्यारोहे मनिवर्जिता ।
षड्जग्रहा तु संपूर्णा प्रातःकालेषु गीयते ॥ २७ ॥

फरजूरागः संपूर्णः सग्रहः सार्वकालिकः ॥ २८ ॥

गौरीरागः सग्रहोऽयं सायंकाले प्रगीयते ।
च्युतपञ्चमसंयोज्यो गीयते गायकोत्तमैः ॥ २९ ॥

वसन्तरागः संपूर्णश्च्युतपञ्चमसंयुतः ।
आरोहे तु गवक्रः स्याद्रिवर्ज्यो गीयते सदा ॥ ३० ॥

१६. गेया षड्जग्रहोपेता संपूर्णा वेगवाहिनी ।
भैरवः सग्रहः पूर्णः प्रातःकाले प्रगीयते ॥ १ ॥

१७. छायावती स्यादारोहे पवर्ज्या सार्वकालिकी ॥

१८. शुद्धमालविरागस्तु संपूर्णो वक्रधैवतः ।

१९. झंकारभ्रमरीराग आरोहे तु निवर्जितः ।
गीयते सर्वकालेषु गानशास्त्रविशारदैः ॥

२०. निग्रहो रीतिगौलाख्य आरोहे तु धवर्जितः ।
संपूर्णश्चैष गातव्यः सायाह्ने गीतकोविदैः ॥

हिन्दोलस्त्वौडुवो रागः पञ्चमर्षभवर्जितः ।
षड्जग्रहेण संयुक्तो गातव्यः सर्वदा बुधैः ॥ १ ॥

संपूर्णा नागगांधारी ह्यारोहे च गवर्जिता ।
षड्जग्रहा सर्वकाले गेया गायकसत्तमैः ॥ २ ॥

आरोहे रिषभं त्यक्त्वा धवक्रं च समाश्रिता ।
संपूर्णा सग्रहोपेता भवेदानन्दभैरवी ॥ ३ ॥

घण्टारवस्तु संपूर्णः सायं गेयश्च धग्रहः ॥ ४ ॥

मार्गहिन्दोलरागः स्यादारोहे च रिवर्जितः ।
अवरोहे निपावर्ज्यो रिवक्रो ग्रहषड्जकः ॥ ५ ॥

स्याद्धिन्दोलवसन्तस्तु रिषभेण हि वर्जितः ।
आरोहणे निवर्ज्यः स्यादवरोहे निवक्रितः ॥ ६ ॥
आभेरी सग्रहा पूर्णा स्यादारोहे निवर्जिता ॥ ७ ॥
नवरत्नविलासस्तु निवर्ज्यः षाडवो मतः ॥ ८ ॥
संपूर्णो भैरवीरागः सायंकाले प्रगीयते ।
पञ्चश्रुतिर्धैवतोऽत्र क्वचित्स्थाने प्रयुज्यते ॥ ९ ॥
आहिरी सा तु संपूर्णा सग्रहा श्रोत्ररञ्जनी ।
गीतोक्तमेलमार्गेण याणयामे प्रगीयते ॥ १० ॥
धन्याशिरागः संपूर्ण आरोहे रिधवर्जितः ।
गानतत्त्वार्थविद्भिः स प्रातःकाले प्रगीयते ॥ ११ ॥
स्याद्गोपिकावसन्ताख्यः पूर्णः षड्जग्रहान्वितः ।
आरोहे तु धवक्रः स्यादवरोहे रिवक्रितः ॥ १२ ॥
माञ्जिरागस्तु संपूर्णः सग्रहो गीयते सदा ॥ १३ ॥
मुखार्याख्यः स रागः स्यादारोहे गनिवर्जितः ।
संपूर्णः सग्रहोपेतः सर्वकालेषु गीयते ॥ १४ ॥

२१. किरणावलिरागस्तु संपूर्णः सग्रहान्वितः ।
पधमैः त्यक्तगांधारमारोहे चावरोहणे ।
धमयोर्वक्रतां कृत्वा सर्वकालेषु गीयते ॥

२२. श्रीरागः सग्रहः पूर्णश्चारोहे चाल्पधैवतः ।
अवरोहे गधमः स्यात्सायं गेयः शुभावहः ॥

मणिरङ्गुः सग्रहांशः षाडवोऽयं धवर्जितः ।
गवर्जितः स्यादारोहे सर्वकालेषु गीयते ॥ १ ॥
संपूर्णा सग्रहोपेता चारोहे पधवर्जिता ।
दिनस्य चरमे यामे गेया मालवभैरवी ॥ २ ॥

भातगौया रिधत्यक्ता शुद्धधन्याशिका स्मृता ।
षड्जग्रहसमायुक्तौडुवीति च निगद्यते ॥ ३ ॥
रागः कन्नडगौलोऽयं निषादग्रहसंयुतः ।
अवरोहे धवर्ज्यः स्यात्सायाह्नेषु प्रगीयते ॥ ४ ॥
षड्जग्रहः शुद्धदेशी त्वारोहे च गवर्जितः ।
पूर्णो धपक्र आरोहेऽप्यवरोहे पवक्रितः ॥ ५ ॥
संपूर्णा देवगांधारी षड्जग्रहसमन्विता ।
रिधवक्रा तथाऽऽरोहे प्रातःकाले च गीयते ॥ ६ ॥
रिवर्जिता मालवश्रीरारोहे तु धवर्जिता ।
षड्जग्रहा षाडवी च सर्वयामेषु गीयते ॥ ७ ॥
श्रीरञ्जनी षाडवी च पवर्ज्या सार्वकालिकी ॥ ८ ॥
कापिरागश्च संपूर्णः सग्रहः सार्वकालिकः ॥ ९ ॥
हुशानिरागः संपूर्णः सग्रहः सार्वकालिकः ॥ १० ॥
बृन्दावनी त्वौडुवी च सग्रहा गधवर्जिता ॥ ११ ॥
सैन्धवी सग्रहा पूर्णा चारोहे तु धवक्रिता ॥ १२ ॥
संपूर्णा सग्रहोपेता चारोहे तु धवक्रिता ।
पवर्जिताऽवरोहे च स्यान्माधवमनोहरी ॥ १३ ॥
मध्यमादिस्तु रागोऽयं मध्यमग्रहसंयुतः ।
गधलोपादौडुवः स्यात्सायंकाले च गीयते ॥ १४ ॥
गवर्जितः षाडवोऽयं रागो देवमनोहरी ।
आरोहे चावरोहे च धवक्रः सग्रहान्वितः ॥ १५ ॥
पूर्णो रुद्रप्रियारागश्चावरोहे धवर्जितः ॥ १६ ॥
दरबारुश्च संपूर्णो लक्ष्यमार्गेण गीयते ॥ १७ ॥
सोहनारागस्तु पूर्णः षड्जग्रहसमन्वितः ।
आरोहे तु पधक्रश्च गीयते लक्ष्यवेदिभिः ॥ १८ ॥

संपूर्णो नायकीरागः षड्जग्रहसमन्वितः ।
लक्ष्यमार्गानुसारेण गीयते सार्वकालिकः ॥ १९ ॥

२३. रागो वेलावलिर्ज्ञेयो ह्यारोहे गनिवर्जितः ।
धैवतग्रहसंयुक्तः प्रातःकाले प्रगीयते ॥

२४. रागो धीरवसन्ताख्यो गवर्ज्यो वक्रधैवतः ।
अवरोहे धवर्ज्यः स्यात्संपूर्णः सार्वकालिकः ॥

२५. पूर्णः शरावतीराग आरोहे रिगवर्जितः ।
सग्रहः सर्वकालेषु गीयते गायकोत्तमैः ॥

२६. पूर्णस्तरङ्गिणीराग आरोहे रिगवर्जितः ।
अवरोहे पधनिधरिगमागरिसंयुतः ।
गीयते सर्वकालेषु सग्रहश्चोच्यते बुधैः ॥

२७. सौरसेनाभिधो रागस्त्ववरोहे रिवर्जितः ।
संपूर्णः सर्वकालेषु गीयते सग्रहोऽपि च ॥

२८. केदारगौलः संपूर्णस्त्वारोहे गधवर्जितः ।
निषादग्रहसंयुक्तः सायंकाले प्रगीयते ॥
बलहंसाख्यरागोऽयमारोहे च निवर्जितः ।
सग्रहः सर्वकालेषु गीयते गायकोत्तमैः ॥ १ ॥
संपूर्णो माहुरीराग आरोहे गनिवर्जितः ।
षड्जग्रहसमायुक्तः सर्वकालेषु गीयते ॥ २ ॥
देवक्रिया चौडुवी स्याद्गनिवर्ज्याऽथ सग्रहा ॥ ३ ॥
आरोहे चावरोहे च धवर्ज्याऽन्धालिका गता ॥ ४ ॥
संपूर्णा सग्रहोपेता गेया च्छायातरङ्गिणी ॥ ५ ॥
स्यान्नारायणगौलस्तु संपूर्णो निग्रहान्वितः ।
आरोहे गधवर्ज्यश्च विन्यासाद्गीयते क्वचित् ॥ ६ ॥
नटनारायणीरागश्चारोहे द्वि गवर्जितः ।
निवर्ज्यः षाडवस्तु स्याद्गीयते सतत बुधैः ॥ ७ ॥

काम्भोजिरागः संपूर्णश्चारोहे गनिवर्जितः ॥ ८ ॥
कन्नडारागः संपूर्णश्चारोहे रिषभः क्वचित् ॥ ९ ॥
षड्जग्रहा च संपूर्णा भवेदीशमनोहरी ॥ १० ॥
सूरटो राग आरोहे गधौ त्यक्त्वा प्रगीयते ॥ ११ ॥
आरोहे गनिवर्ज्यश्च सग्रहः सार्वकालिकः ।
स्यादेरुकुलकाम्भोजीराग इत्युच्यते बुधैः ॥ १२ ॥
अठाणारागः संपूर्णः सग्रहः सार्वकालिकः ॥ १३ ॥
धरिवर्ज्योऽवरोहे तु रागो नाटकुरञ्जिका ।
षड्जग्रहसमायुक्ता गीयते लक्ष्यवेदिभिः ॥ १४ ॥
जुजावन्त्याख्यरागश्च संपूर्णः सग्रहान्वितः ।
लक्ष्यमार्गानुसारेण गीयते गानवेदिभिः ॥ १५ ॥
२९. शंकराभरणं पूर्णं सायं गेयं च सग्रहम् ॥
कुरञ्जिरागः संपूर्ण आरोहे तु धवर्जितः ।
अवरोहे धवक्रः स्यात्सर्वकालेषु गीयते ॥ १ ॥
पूर्णो नारायणीरागो गग्रहः प्रातरिष्यते ॥ २ ॥
आरभिः सर्वदा गेय आरोहे गनिवर्जितः ।
क्वचिदारोहसंयुक्तनिषादो निग्रहो भवेत् ॥ ३ ॥
शुद्धो वसन्तरागोऽयं संपूर्णः सार्वकालिकः ॥ ४ ॥
संपूर्णः सग्रहो नारायणदेशाक्षिरागकः ॥ ५ ॥
षड्जग्रहो निवर्ज्यः स्यादारोहे च गवर्जितः ।
सामराग इति ख्यातः सर्वकालेषु गीयते ॥ ६ ॥
आरोहे पूर्वगौलस्तु गवर्ज्यः सार्वकालिकः ॥ ७ ॥
आरोहे धकरिषमो धरिवक्रोऽवरोहणे ।
नागध्वन्याख्यरागोऽयं सग्रहः सार्वकालिकः ॥ ८ ॥
औडवो मधवर्ज्यत्वाद्धंसध्वनिरिहेष्यते ॥ ९ ॥

आरोहे मध्यमे वक्रः कचिद्योगो निषादकः ।
विलाहुरीरागगत्या सर्वकालेषु गीयते ॥ १० ॥
रिवर्ज्याऽऽरोहे संपूर्णा बेगडा सार्वकालिकी ॥ ११ ॥
रागः पूर्णचन्द्रिकाख्यः संपूर्णः सग्रहोऽपि च ।
अवरोहे धवर्ज्यः स्याद्धवक्रः सार्वकालिकः ॥ १२ ॥
त्यक्तपञ्चमकाऽऽरोहे सारस्वतमनोहरी ।
अवरोहे रिवक्रा स्यात्सग्रहा सार्वकालिकी ॥ १३ ॥
केदारः षाडवो रागो धैवतस्वरवर्जितः ।
आरोहे वक्रगांधारः षड्जग्रहसमन्वितः ॥ १४ ॥
नवरोजुः पूर्णरागः षड्जग्रहसमन्वितः ।
पपयोरन्तरे बुद्ध्या गातव्यो लक्ष्यकोविदैः ॥ १५ ॥
नीलाम्बर्याख्यरागस्तु संपूर्णो धवक्रधैवतः ।
अवरोहे रिवक्रश्च गीयते लक्ष्यवेदिभिः ॥ १६ ॥
३०. नागाभरणरागोऽयमारोहे धवक्रधैवतः ।
अवरोहे धवर्ज्यः स्यात्सग्रहः सार्वकालिकः ॥
सामन्तरागः संपूर्ण आरोहे धवक्रधैवतः ।
षड्जग्रहसमायुक्तः सर्वकालेषु गीयते ॥ १ ॥
३१. पूर्णः कलावतीराग आरोहे तु निवर्जितः ।
अवरोहे गवक्रः स्याद्गेयो गायकसत्तमैः ॥
३२. आरोहे त्यक्तगांधारो धवर्ज्यश्चावरोहणे ।
रिवर्ज्यः सग्रहो रागचूडामणिरिहेष्यते ॥
३३. गङ्गातरङ्गिणीरागो धरिवक्रोऽवरोहणे ॥
३४. त्यक्तधैवत आरोहे धवक्रश्चावरोहणे ।
गवर्ज्यः सग्रहः पूर्णच्छायानाटो हि गीयते ॥
३५. शैलदेशाक्षिरागः स्यादारोहे रिनिवर्जितः ।
अवरोहे गवर्ज्यश्च प्रातःकाले प्रगीयते ॥

५५. निवर्ज्याऽऽरोहणे पूर्णा शामला सार्वकालिकी ॥
५६. चामरः पूर्णरागः स्यात्सग्रहा सार्वकालिकी ॥
५७. सग्रहा सर्वकालेषु गातव्या च सुमद्युतिः ॥
५८. देशिसिंहरवः पूर्णः सर्वकाले प्रगीयते ॥
५९. धामवत्यथ संपूर्णा सग्रहा सार्वकालिकी ॥
६०. अवरोहे धवर्ज्यः स निषधो राग इष्यते ॥
६१. निषादवर्ज्य आरोहे कुन्तलः सग्रहान्वितः ॥
६२. रतिप्रिया च संपूर्णा सग्रहा सार्वकालिकी ॥
६३. गीतप्रिया सुसंपूर्णा सग्रहा सार्वकालिकी ॥
६४. भूषावती सदा गेया सग्रहा गायकोत्तमैः ॥
६५. शान्तकल्याणिरागश्च सर्वकाले प्रगीयते ॥
औडुवो मोहनो रागः सग्रहः सार्वकालिकः ॥ १ ॥
यमुनाकल्याणिरागः संपूर्णः सग्रहान्वितः ॥ २ ॥
सायं गेयस्तु सारङ्गः शुद्धमध्यमगान्वितः ॥ ३ ॥
६६. चतुरङ्गिणिरागः स्यादवरोहे धवर्जितः ॥
रिधवर्ज्या तु गातव्या ह्यौडुव्यमृतवर्षिणी ॥ १ ॥
६७. निवर्ज्याऽऽरोहणे गेया ह्यवरोहे गवर्जिता ।
संतानमञ्जरी नाम सर्वकाले प्रगीयते ॥
६८. जोतिरागश्चावरोहे रिवर्ज्यः सार्वकालिकः ॥
६९. धौतपञ्चमरागः स्यादवरोहे रिवर्जितः ॥
७०. अवरोहे रिवर्ज्या च गेया नासामणिः सदा ॥
७१. अवरोहे रिवर्ज्यः स्यात्सग्रहः कुसुमाकरः ॥
७२. रिधवर्ज्याऽऽवरोहे तु रागाङ्गी रसमञ्जरी ॥

—o—

३६. नाटः षड्जग्रहोपेतोऽवरोहे गधवर्जितः ॥
३७. सौगन्धिनी तु संपूर्णा चारोहे गनिवर्जिता ॥
३८. जगन्मोहनरागोऽयं सग्रहः सार्वकालकः ॥
३९. पूर्णा वराली सततं गीयते सग्रहान्विता ॥
४०. नमोमणिस्तु संपूर्णा चारोहे रिधवक्रिता ॥
४१. आरोहे रिधवक्रः स्यादवरोहे धवर्जितः ।
संपूर्णः कुम्भिनीरागः सर्वकालेषु गीयते ॥
४२. आरोहे रिधवक्रश्च धवर्ज्यश्चावरोहणे ।
पूर्णो रविक्रियारागः सग्रहः सार्वकालिकः ॥
४३. निवर्ज्याऽऽरोहणे पूर्णा गीर्वाणी सार्वकालिकी ॥
४४. धवक्राऽऽरोहणे पूर्णा भवानी सार्वकालिकी ॥
४५. पूर्णा पन्तुवराल्याख्या षड्जग्रहसमन्विता ॥
सिन्धुरामक्रियारागो ह्यवरोहे रिवक्रितः ॥ १ ॥
४६. आरोहे गनिवर्ज्यश्च परिहीनोऽवरोहणे ।
संपूर्णः स्वरराजोऽयं सर्वकाले प्रगीयते ॥
४७. सौवीरस्त्ववरोहे हि पवर्ज्यः सार्वकालिकः ॥
४८. जीवन्तिकाऽवरोहे तु धवर्ज्या सार्वकालिकी ॥
४९. आरोहे धवलाङ्गस्तु निवर्ज्यः सार्वकालिकः ॥
५०. संपूर्णो नामदेवयाख्यः षड्जग्रहसमन्वितः ॥
५१. काशिरामक्रियारागः संपूर्णः सग्रहान्वितः ।
मध्याह्नकाले गातव्य आरोहे तु रिवक्रितः ॥
५२. रमामनोहरी पूर्णा सर्वकालेषु गीयते ॥
५३. रामक्रियरागोऽयं सर्वकाले प्रगीयते ॥
५४. पूर्णो वैरावतीरागस्त्ववरोहे धवर्जितः ॥

५५. निवर्ज्याऽऽरोहणे पूर्णा शामला सार्वकालिकी ॥
५६. चामरा पूर्णरागः स्यात्सग्रहा सार्वकालिकी ॥
५७. सग्रहा सर्वकालेषु गातव्या च सुमद्युतिः ॥
५८. देशिसिंहरवः पूर्णः सर्वकाले प्रगीयते ॥
५९. धामवत्यथ संपूर्णा सग्रहा सार्वकालिकी ॥
६०. अवरोहे धवर्ज्यः स निषधो राग इष्यते ॥
६१. निषादवर्ज्य आरोहे कुन्तलः सग्रहान्वितः ॥
६२. रतिप्रिया च संपूर्णा सग्रहा सार्वकालिकी ॥
६३. गीतप्रिया सुसंपूर्णा सग्रहा सार्वकालिकी ॥
६४. भूपावती सदा गेया सग्रहा गायकोत्तमैः ॥
६५. शान्तकल्याणिरागश्च सर्वकाले प्रगीयते ॥
औडुवो मोहनो रागः सग्रहः सार्वकालिकः ॥ १ ॥
यमुनाकल्याणिरागः संपूर्णः सग्रहान्वितः ॥ २ ॥
सायं गेयस्तु सारङ्गः शुद्धमध्यमगान्वितः ॥ ३ ॥
६६. चतुरङ्गिणिरागः स्यादवरोहे धवर्जितः ॥
रिधवर्ज्या तु गातव्या ह्यौडुव्यमृतवर्षिणी ॥ १ ॥
६७. निवर्ज्याऽऽरोहणे गेया ह्यवरोहे गवर्जिता ।
संतानमञ्जरी नाम सर्वकाले प्रगीयते ॥
६८. ज्योतिरागश्चावरोहे रिवर्ज्यः सायंकालिकः ॥
६९. धौतपञ्चमरागः स्यादवरोहे रिवर्जितः ॥
७०. अवरोहे रिवर्ज्या च गेया नासामणिः सदा ॥
७१. अवरोहे रिवर्ज्यः स्यात्सग्रहः कुसुमाकरः ॥
७२. रिधवर्ज्याऽऽवरोहे तु रागाङ्गी रसमञ्जरी ॥

—o—